श्रीमते रामानुजायनमः

# गुरुवंश महा काव्यम्

श्रीशठकोपनाथ यामुनयतिराज भट्टर्नंजि
य्यर्नंबिळ्ळै वेदान्तदेशिकलोकाचार्य वरवरमुनि
श्रीमत्त्रिदंडि श्रीमन्नारायण रामानुज जियरुस्वा
मिदिव्यचरित्रात्मकम् टिप्पणीसहितम्·

रचयिता

उभयवेदान्त विद्वान् शिरशिनहळ्

कृष्णमाचार्य शतावधानी

कोरुट्ला, जि. करीमनगरम्

आन्ध्रप्रदेशः

१९७० हूणाब्दः

ॐ

श्रीगुरुवंश महाकाव्य मुद्रापकाणाम्

श्रीयुत मुत्तेंपेट कास्कंटि नारायणराय महाशयानाम्

## कवि शुभाशिषः

आन्ध्रप्रदेशक करींनगराभिधेऽस्मिन्
सन्मंडले वेलुमवीरजन प्रसिद्धः
श्रीकासुगंटि कुलसंभव पुण्यमूर्तिः
नारायणाख्य जनपालक मौळिरास्ते

श्रीमद्रत्नम लक्ष्मराय तनयश्श्रीचन्द्र मत्याःपति
शिशष्यश्श्रीयति सार्वभौम कलिजिद्रामानुजस्वामिन
पुत्रायस्य च राजकीय निपुणाः पंचापिसत्पुत्रिका
स्तिस्रस्सोय मिलाधिपो विजयते नारायणाख्यप्रभुः

मुत्तेंपेट पुराधिवास रसिको मुख्यश्चभूस्वामिनाम्
भक्ताभीष्टद कोंडगट्टुहनुमत्कैंकर्य दीक्षापरः
श्री नारायण रामसोदरयति श्रीपाद सेवारत
श्श्रीनारायणराय भूपतिलक श्श्रीसंयुतो राजते

श्रीनारायण रामसोंदरयति श्रीमच्चरित्रान्वितं
येनेदं गुरुवंश काव्य मधुना मुद्रापितं भक्तितः
सोऽयं श्रीयुत कासुकंट्टि कुलज स्सत्पुत्रपोत्रै स्सदा
श्रीनारायणराय सज्जन्मणिर्जीया च्चिरं भूतले.

—: समस्त सन्मंगळानि भवंतु :—



श्रीमत् त्रिदण्डि श्रीमन्नारायण जिय्यर् स्वामिनः



श्रीमद्यतिसार्वभौम कलिजिद्रामानुजार्यस्वामिनः (द्रव्यदातुराचार्याः)



श्रीकृष्णमाचार्यः शतावधानी, तस्य धर्मपत्नी विजयम्मा (ग्रन्थकर्ता)



श्रीयुत कास्कंटि नारायणरायः (द्रव्यसहायकः)

श्रीहयग्रीवायनमः

श्रीमते रामानुजायनमः

# गुरुवंश महाकाव्यम्

वागर्थ सिद्धयेदेवं । वागीशं वागगोचरम्
गन्धर्वकन्धरं वन्दे कुन्द मन्दार सन्निभम् १

(१) हारीतान्वय संभूतं । रामानुजविधुं भजे
यत्पाद स्पर्शमात्रेण । पाषाणोऽप्यमृतं स्रवेत् २

(२) गुरुमालां वहाम्यद्य । शिरसा सुमनोञ्चिताम्
यदामोदेन विद्वद्भिः । महानन्दोऽनुभूयते ३

पूर्वोक्त गुरुवंशेभ्यः । किंचिदुधृत्य लिख्यते
यथा पानाय गंगातः । किंचिदानीयते पयः ४

---

(१) अन्वयः = वंशएव. अन्वय क्षीरजलधिः. "अन्वयः क्षीरजलधिरिति प्राचीनकोशः. पादस्पर्शः = चरणस्पर्शः. किरणस्पर्शश्च

(२) गुरुमालाम् = आचार्यपंक्तिम् अधिकमालिकाम् सुमनोञ्चिताम् = सुमनोभिः = विद्वद्भिः. पुष्पैश्च अञ्चिताम् युक्ताम्. आमोदेन = संबन्धेन. परिमळेन. महानन्दः = मोक्षः. अमितानन्द.

कविभिःकलिदासाद्यै । रात्माशक्ति निवेदिता
नतथाहं वदाम्यद्य । कृतौमे नस्वतन्त्रता ५

भाषावनी सुमैश्शब्दै । र्घटकोन्तःस्थितो हरिः
सरसानां तदामोद । स्त्वहं केवल लेखकः ६

(१) रसवच्छब्दयोगेन । रचना ल्यापि मत्कृता
गृह्यते विबुधैर्भूपै र्ह्रीबेरेणेवमृन्तिका ७

(२) काळिदास स्तथानास्मि । रघुवंशादि काव्यकृत्
किन्त्वा द्यार्यावलो काळि दासोऽहंगुरुवंशकृत् ८

(३) गुरुवंशं प्रवक्ष्यामि । हरिमूलं सपर्वकम्
यत्रमुक्तावळिश्चाभू । दनन्तमणिमण्डिता ९

---

(१) रसवच्छद्बयोगेन = सरसशद्बसंयोगेन, ह्रीबेरेण = सुगन्धिमूलवि शेषेण. आन्ध्रभाषायाम् ( कुरुवेरु ) तस्य प्रक्षळने परिमलोगच्छतीति मृत्तिकया सहैव धारयन्ति. दक्षिणदेशे सुप्रसिद्धः.

(२) आद्यानाम् = पूर्वेषाम्. आचार्याणाम् = गुरुणाम्. अवलोकाळेः = कटा क्षपंक्तेः दासः = शेषभूतः. कालदास इत्यपि शद्बतो गम्यते ।

(३) गुरुवंशम् = आचार्याणांकुलम्, अधिक वेणुदण्डम् हरिमूलम् = आचार्य वंशे "लक्ष्मीनाथसमारंभा मित्युक्तरीत्याश्रियः पतिकूटस्थम्. वेणु-दण्डपक्षे केनचित्कृषीवलेनानप्तत्वात् भगवदूप्तम्. सपर्वकम्. आचार्य

गुरुर्वं शस्त्वयं काव्ये । ज्ञानजन्म निमित्तकः
पितृभ्यां वर्ष्मणो जन्म । ज्ञानजन्म गुरोर्भवेत् १०

ज्ञान जन्मनिशिष्यस्य । विद्यामाता गुरुःपिता
शरीर जन्मत श्श्रेष्ठं । ज्ञानजन्मस्थिरं यतः ११

पितृभ्यां भुवि जातोऽपि । पुन र्ज्ञानेन जायते
ततोजनो द्विजः प्रोक्तो । नाद्विजो मोक्षभाग्भवेत् १२

उभाभ्या मेवपक्षाभ्यां । यथाकाशं व्रजेत्खगः
तथैव ज्ञानकर्मभ्यां । द्विजोविष्णुपदंव्रजेत् १३

गुकारोऽज्ञानजं ध्वान्तं । रुकार स्तन्निरोधकः
अज्ञानध्वान्त मार्तण्डो । गुरुरित्यभि धीयते १४

नवित्तमात्र हारी स्या । त्किन्तु चित्तहरोगुरुः
स्वयमज्ञान संमूढः । कथंज्ञान प्रदो भवेत् १५

---

पक्षे ज्ञानवैशिद्यतारतम्येन वाक्यपरंपरायां श्रीशद्ब श्रीमच्छब्दाभ्यां श्रीमत इति सविभाक्तिकत्वेन नामादौ प्रयोगात् तरतम भावयुक्तमिति सांप्रदाययिकार्थः. वेणुपक्षे भाग भेदयुक्तम् । मुक्तावलिश्च = नित्य-मुक्तानांपंक्तिश्च । शटगोपादि वरवरमुनिपर्यन्तं नित्यमुक्तनां शेने-शादीनामंशाव तारत्वकथनात् । वेणुपक्षे मौक्तिकावळिः । वेणौ मौक्ति कानिजायन्तइति प्रसिद्धिः । अनन्तमणिमण्डिता = अनन्तः =

संसार सागरान्तस्थो । ज्ञानिनं सद्गुरुं भजेत्
भिन्न नावाश्रय स्तब्धः । कथं पारम वाप्नुयात् १६

तस्मात्सद्गुरु वंशोयं । ज्ञेयोध्येयश्च सर्वदा
ततोहं संप्रवक्ष्यामि । गुरुणां वंशमुत्तमम् १७

आजन्म ज्ञानशुद्धाना । माफलोदय कर्मणाम्
आकैवल्यविरक्तानां । भक्तनां हरिपादयोः १८

परार्धैक प्रवृत्तीनां । पारमार्थ्यैक वेदिनाम्
कृपामात्र प्रसन्नानां । प्रपन्नानां श्रियःपतिम् १९

गुरुवंशस्यसर्वस्य । कूटस्थश्श्रीपतिःपुरा
व्यूहेलक्ष्मै विष्णुरूपो । मन्त्रादिकमुपादिशत् २०

श्रियःपतिर्नावतारै । जंगत्पारयितुं क्षमः
गुरुरेवसमुद्धर्ता । तस्माद्गुरुरभूद्धरिः २१

---

शेषएवमणिः = रामानुजस्य शेषांशत्वात् । आचार्यमालायां तस्य-मध्य मणित्वेन निर्देशः । तत्पूर्वाचार्याणां शिरस्सबंधेन तदर्वाचीनानां श्रीपादसंबन्धेनोत्तारकत्वात् । अन्यत्र अपरिमित मणि प्रकाशिता.

(१) लक्ष्मी स्तथा ददौ विष्वक् । त्सेनाय कृपयामनुम्
विष्वक्त्सेनश्शठाराते । स्तस्मा द्वंशपरंपरा २२

प्रपंचे भारतं क्षेत्रं । शन्ति ज्ञानफलप्रदम्
तत्रापि दक्षिणो भागो । ज्ञानिरत्न खनिर्भवेत् २३

"कृतादिषु प्रजाराजन् । कलाविच्छन्ति संभवम्
कलौखलुभविष्यन्ति । नारायणपरायणाः २४

क्वचित्क्वचिन्महाभागाः । द्रावि डेषुच भूरिशः
तांम्रपर्णी नदीयत्र । कृतमालापयस्विनी" २५

---

(१) लक्ष्यादीनां तप्तचंक्रांकणादिपूर्वकं मंत्ररत्न चरम श्लोकानामुपदेश इति संप्रदायः श्रीवचनभूषण व्यख्या कठिनदीपिकायांमुदाहृतानि पांचरात्रागम वासुदेव संहिता स्थानि प्रमाणानि "श्रीविष्णुलोके भगवान् हरिर्नारायण स्स्वयम् प्रोक्तवान् मन्त्ररत्नादीन् श्रियैता-पादि पूर्वकम् । साचप्रोक्तवती प्रीत्यातापपुण्ड्रादिपूर्वकं शेनेशाय श्रियाविष्णोर्मूलमन्त्रद्वयादिकम् । शेनेशस्स्व यमागत्य प्रीत्या श्रीनग-रींशुभां । शठकोपाय मुनयेतिन्त्रिणीम्लवासिने । तापादिपूर्वकंश्लोकं मन्त्ररत्न द्वयादिकम् । विष्णुपत्न्या विशालाक्ष्या नियोगादुपदिष्ट-वान् । शेनेशकरुणालब्धपंच संस्कार संस्कृतः । तथा मधुरकव्यादेः पञ्चसंस्कारदो गुरुः । तस्मैद्रविडवेदान्त चतुर्णामुपदेशकृत् । पुनश्च-नाथ मुनेये पंच संस्कारपूर्वकं भट्टनाथप्रभृतिभिर्निर्मितैर्दिव्ययोगिभिः दिव्यैर्विंशति संख्याकैस्तथांगोपांग सज्ञकैः । दुरितध्वंसिभिर्दिव्यैः प्रबंधै स्सहदेशिकः तेषांद्राविडवेदानां चतुर्णामुपदेशकृत् ।

इत्यादिना भागवते । व्यासेन परिकीर्तितम्
प्रायस्तत्त्रैव सर्वेषां । ज्ञानिनांहि समुद्भवः २६

आसी द्दक्षिणदेशेषु । पांड्यदेशोऽतिविस्तृतः।
तांम्रपर्णीतटेतत्र । राजते कुरुकापुरी २७

श्रीपुरीति प्रसिद्धासी । दादिन थश्रियाश्रिता
तांम्रपर्णी नदी तोय । वातैस्संताप नोदिनी २८

हरिभक्त समाकीर्ण । शृंगाटक महापथा
नारिकेळादि सद्वृक्ष । पुष्पोद्यान समावृता २९

सौधैर्नानाविधैर्युक्ता । सिक्ता चन्दन वारिभिः
शुकाश्च तत्रगायन्ति । द्राविडा म्नाय मद्भुतम् ३०

श्रीवैष्णवा स्तत्र सन्ति । वैकुण्ठव दकुंठिताः
अस्मत्कुल धनंयत्र । संजातं तत्किमुच्यते ३१

तत्पुर श्चाधिकारीश्री । कारीविष्णु पदोद्भवः
कामादि कारिरस्यासी । त्पनी श्रीना थनायिका ३२

पतिधर्म चरीसाध्वी । नारीणा मुत्तमावधूः
कुरंग नगरीदेव वराद्गर्भमधारयत् ३३

शुशुभे तेन गर्भेण । सादेवी नाथनायिका
कुक्षि निक्षिप्त मार्तंडा । प्राचीदिगिव सुन्दरी ३४

त्रिँचत्वारिं शतिशुभे । वर्षेकल्यादितःपरम्
वृषभे बहुधान्येच । विशखायाँ शुभेदिने ३५

सुषुवे दिव्य संकाशं । पुत्रं सा नाथनायिका
रामं कोसल कन्येव । मित्र मैन्द्री दिशायथा ३६

गर्भस्थितस्य तस्यासी । द्धरेर्दिव्य कटाक्षतः
भक्तिरुपं महद्ज्ञानं । स्वस्वरूप प्रकाशकम् ३७

(१) शठवायु निरोधेन । शठकोप इति स्मृतः
परस्यच परेषाम प्यंकुश त्वा त्परांकुशः ३८

नकरोतिपयः पानं । योगस्थो नैव चेष्टते
ज्ञानामृतेन तृप्तस्तु । नैवींकिंचि दपेक्षते ३९

---

(१) परस्य=निरंकुशस्वतंत्रस्य भगवतः चेतनविषयेरक्ष कत्वनियाम-कत्वादंकुशः । परेषाम्=स्वव्यतिरिक्तात्मनाम् स्वगाधाबोधजनन द्वारास्वरूपनियमानदं कुशः ।

तथास्थितं शिशुं दृष्ट्वा । पितरौदे वसन्निधौ
निर्निद्रं तिंत्रिणी मूले । निवेश्या जग्मतुर्गृहम् ४०

बाल स्तत्तिंत्रिणीमूल । कोटरेयोग पीठगः
ववृधेषोढशाब्दानि । शुक्लपक्षेयथा शशी ४१

अकरो त्पंचसंस्कारन् । विष्वक्सेन स्समागतः
परभक्तिं परज्ञानंपरमां भक्ति मास्थितः ४२

लवणांबुवदग्राह्यं । वेदंमेघो यथापिबन्
सर्वोपयुक्त मातेने । योगेन शठजित्तथा ४३

दिव्यदेश स्थिता नर्च्य । देवान् ध्याने समागतान्
मंगलाशासनं चक्रे । भक्त्या हृदयएवसः ४४

तत्पूर्व जात योगीन्द्र । स्सामवेदी पुरश्शि खः
मधुरःकविर प्यासी । द्रवेः पूर्वोऽरुणो यथा ४५

तीर्थयात्रां प्रकुर्वन्स । क्वचित्साकेत मागतः
अपश्य दद्भुतंरात्रौ । दक्षिणेंभास्करोदयम् ४६

रात्रौ द्युतिं समालोक्य दक्षिणस्यां दिशि स्थिताम्
आगत्य श्रीपुरीं तत्र । तिन्त्रिणी मूलमापसः ४७

(१) नारायणाश्रयं दिव्यं गोसहस्र तमोऽपहम्
सिषेवे वेदरूपंतं वकुळा भरणं रविम् ४८

मधुरः कविराट् तत्र । स्तुव न्द्राविड गाधया
प्रसन्न मकरो द्भक्त्या । योगिनं शठवैरिणम् ४९

कृपा मात्र प्रसन्नोऽय । कुरुकापुरिकारिजः
योगानुभव संभूत । वेदानुपदिदेशतम् ५०

स शठारे रधीत्येतां । सार्थां द्राविडसंहिताम्
रेजे निशि रविन्यस्त । द्युतिं प्राप्य यथाऽनलः ५१

योगस्थितं शठारातिं । सेव्यमानस्स भक्तिमान्
तद्विग्रहं प्रतिष्ठाप्य । व्यधा द्गाथोत्सवां स्तदा ५२

पाण्ड्यराजाश्रितो विद्वान् । कंबो नाम महा कविः
स्वशिष्यं प्रेषयामास । शठकोपेष्यसूयया ५३

---

(१) नारायणा श्रयम्=शठकोपपक्षे. नारायणस्य=विष्णोः आश्रयम्. आधारम्. हृदयस्थितश्रियः पतिमित्यर्थः । रविपक्षे="ध्येयस्सदा सवितृमंटलमध्यवर्तीनारायणः" इत्युक्तरीत्या नारायणाश्रयम् । दिव्यगोसहस्रात्=विलक्षणगाथासहस्रात्. किरणसहस्रात्. तमोनुदम्=अज्ञाननिरासकम् अन्धकारनिरासकम्. वेदरूपम्. द्राविडवेदस्वरूपम् वेदात्मकम्.

श्रीशंख फलकं तत्र । सद्ग्रन्था न्वहति स्वयम्
अन्यं जहाति तद्वार्तां । बुबुधे मधुरः कविः ५४

शठकोप सहस्रस्थां । ददावल्पाक्षरां तदा
दशमे शतके "कण्ण" निति गाधां वि'लख्यताम् ५५

तत्पत्र विनिवेशेन । कंबग्रंधा नपोह्यतत्
फलकं तत्स भामध्ये । दधारा नर्घमाल्यवत् ५६

तदा शठारिगाधानां । ज्ञात्वाविभव मद्भुतम्
शठारि स्तोत्रयामास । कंबो द्रविडगा धवा ५७

शठजिद्योग संसिद्ध । स्त्वर्च्या रूपेण संस्थितः
त्यक्त्वा विभवरूपं तत् । प्राप'दव्यं परंपदम् ५८

संपूर्णा भ्यस्तगा धानां । सद्यो मुक्तिरजायत
तस्मा ज्जन परित्यागात् । नष्टा गधा शठद्विषः ५९

ततो बहुतरेकाले । नष्टां द्राविड संहिताम्
प्रोद्धतुंमिव माना थो । नाथोमुनिरवातरत् ६०

(१) चंपकारण्य मध्ये श्री । वीरनारायणे पुरे
गोपाल मभजद्दिव्य । गोपाल त्वेप्सयेव सः ६१

(२) योगनिष्टो हरे र्दास्य । योगनिष्टो महार्थवित्
सनाथो ज्ञान भक्ति भ्यां । स नाथो मुनिराडभूत् ६२

गृहस्था श्रम निष्टस्य । तस्यपुत्रोऽप्यजायत
सत्वी श्वरमुनि स्सत्य । ख्याति र्वादि धराशनिः ६३

श्रीमन्ना थमुनिस्सर्व । दिव्यदे शेषु संचरन्
निवृत्तो न्यवस त्स्वस्य । पुरे गोपाल सन्निधौ ६४

कदाचिद्वैष्णवा एत्य । राज गोपाल सन्निधौ
शठकोप सहस्रस्थ । मगायन् दशकंमुदा ६५

अतृप्तामृत संबंद्ध । मतृप्तामृतपूरितम्
श्रुत्वा नाथमु निर्हृष्ट । स्तत्प्रबंधोत्सुको भवत् ६६

तत श्श्रीनगरीं प्राप्य । नष्टांतां सुविचारयन्
शठकोप स्तुतिं लेभे । पूर्वांमधुर भाषिताम् ६७

---

(१) दिव्यगोपाल त्वेप्सया = दिव्यानाम् = विलक्षणानांम्. गवाम् = शठारि गाथानाम्. पालत्वेप्सया = पालकभावंप्राप्तुमिच्छया. अप्राकृतगोपालत्वेप्राप्तीच्छयेव. गोपालम् = अर्चास्वरुपिणम्. गोपालस्वामिनम् । (२) सनाथः = युक्तः

श्री शठारिं समाश्रित्य । तिंत्रिणी मूलसंश्रितम्
जजाप तांस्तुतिभक्त्या । योगसंस्कृतमानसः ६८

आविरासी तदा दीप्त्या । शठकोप दिवाकरः
अज्ञानतिमिरं सर्वं । मपहर्तुं मिवेच्छया ६९

अनुगृह्य कृपा दृष्ट्या । श्रीमन्नाथमुनिंघनम्
संस्कृत्य पंचसंस्कारै । रूचेद्रा।विड संहिताम् ७०

द्राविडाम्नाय सर्वस्वं । दत्वा नाथाय योगिने
निर्भर श्शठजि त्पुत्र । निक्षिप्तस्वो यथा पिता ७१

शठजित्सूक्ति सर्वस्वं । प्राप्य नाथमुनि स्तदा
हृष्टोऽभव त्पुनर्लब्ध्वा । नष्टं द्रव्यं यथा जनः ७२

सद्योमुक्तिं परित्यज्य । स्वान्ते मुक्तिं प्रशासयन्
अन्त र्धाय पुनश्चाचर्य । रूप माप परांकुशः ७३

एवंच दशभि र्योगि । मुख्यैः प्रोक्तैर्वचोमृतैः
चतुस्सहस्रमादाय । नथोमौनी पुरंययौ ७४

यथा व्यास श्श्रुते र्भागा । नकरो न्मिश्रितान्पुरा
तथा नाथ मुनि र्गाथा । व्यभज त्सपृथक्पृ थक् ७५

स्वशिष्यं पुण्डरी काक्ष । मध्याप्य निगमादिकम्
दर्शन स्थापकं चक्रे । संप्रदाय प्रवृत्तये ७६

१) कुरिकानाथ नाम्नेच । योगनिष्ठा मबोधयत्
सुतमाहेश्वर मुनि । मत्समस्ते सुतो भवेत् ७७

अनेक स्त्री युतंचोळ । भूपंदृष्ट्वाप्रियायुतम्
श्रीकृष्ण मागतं मत्वा । मुमोहमुनिपुंगवः ७८

एकदा स्वगृहद्वार । मागतौ द्वौ धनुर्धरौ
कान्तया ताविति शृत्वा । मत्वातौ रामलक्ष्मणौ ७९

विचिन्वन्स्तावनालोक्य । योगेन तनुमत्यजत्
पश्चाच्छ्रीपुंडरीकाक्षो । दर्शन स्थापकोऽभवत् ८०

श्रीरंगेन्यवसद्रंग । नाथं स्तोतुं मुदान्वितः
राममिश्रश्च तंप्राप्य । शिष्यःपुत्रइवाभवत् ८१

गुरोर्गेहेचकार्याणि । सर्वाणि बहुवत्सरम्
कृत्वा सर्व रहस्यार्थं । कुशलोऽभव दात्मवान् ८२

---

(१) कुरिकानाथः=कुरुहावलप्पन् इति द्राविडनाम.

कायेनमनसावाचा । योगुरुं सेवतेनरः
सर्वार्थसिद्धि माप्नोति । स शिष्यो नेतरः स्मृतः ८३

एकदाजलमाहर्तुं । गच्छन्त्यो र्गुरुकन्ययोः
मध्ये कर्दमकुल्यायां । सुप्त्वा पृष्टमदाद्गतेः ८४

तद्भक्तिं परितो वीक्ष्य । पुण्डरीकाक्ष सद्गुरूः
श्रीराम मिश्रमकरो । त्संप्रदाय प्रवर्तकम् ८५

पुण्डरीक दळनेत्र सद्गुरू
राममिश्रमवद द्दयापर
अस्मदार्य निजशासनं त्वया
कार्य मद्य नमया कृतंतुतत् ८६

श्रीमदीश्वरमुने स्तनूभवो
यामुनार्य गुणधि र्भवविष्यति
तस्य सर्व मनुगृह्यतां त्वया
नाथसंचित रहस्य साधनम् ८७

इति मधुरवचोभीराम मिश्रं तथोक्त्वा
स्वगुरु चरणयुग्मं संस्मरन् प्राप मुक्तिम्
तदनुगुरु विमुक्तो राममिश्रोनु तप्तो
न्यवस दखिल शिष्यै स्संश्रितो रङ्गधाम्नि ८८

इति श्रीमत्सदाचार्य कृपालब्ध सारस्वतस्य
कृष्णमाचार्यं शतावधानिनःकृतिषु
गुरुवंशमहाकाव्ये
प्रथमस्सर्गः

श्रीमते रामानुजायनम:

# द्वितीय स्सर्ग:

सवीर नारायण नामकेपुरे
गरीयसो नाथमुने स्तनूभव:
तनूभवाप्तिं मनसानुचिन्तय
न्नुवास पत्नी सहितो हितो हरे: १

(१) ततोऽस्य जायेश्वर मौनि सद्विद:
क्षितौ सदाचार्य पथानुसारिण:
सदौहृदाऽऽसी त्किल रङ्गनयकी
प्रपन्नलोकस्य च भाग्ययोश्चत: २

सती सती गर्भवती लसद्वती
श्रुतीरितार्था चरणेषु जाग्रती
रराज सा लक्षित दिव्यतेजसा
सराजगर्भा सुरराज दिग्यथा ३

---

(१) रङ्गना यिकेति वक्तव्येऽपि तथैवनामत्वात् "नमश्श्रीरङ्ग नायक्यै यद्भ्रूविभ्रमभेदत:" इति पराशरभट्टार्यैं श्श्रीरङ्गराज स्तवेप्रयुक्त-त्वात् रङ्गनायकीत्युक्तम्

शुभेमहूर्ते सुषुवे सुलक्षणम्
कुमारमेकं सुकुमार मङ्गना
प्रभाविनं भाविन मार्यं सेविनम्
घनागमे शुक्तिरिवेद्ध मौक्तिकम् ४

सबालकोऽशोभत मंजुलालकः
कलाधरो मेघलवा वृतोयथा
पिता सुतं वीक्ष्य समुज्वलाकृतिम्
जहर्षपूर्णस्सरितां पतिर्यथा ५

निशम्य नाथार्य सुतस्य संततिं
स राममिश्रो गुरुशासनं स्मरन्
समागत श्शुद्धदिने च बालकं
चकारतं यामुन नाम शोभितम् ७

विधायबालं कृतपंच संस्कृतिं
प्रदाय दिव्याशिषमस्य वृद्धये
सुधामयात्मा सच राम नामको
मुदाययौ रङ्गपुरं गुरूत्तमः ६

पितुर्गृहे नाथमनेस्सुपौत्रको
दिनेदिने संववृधे सितेदळे

शशीवलावण्य कळाविशेषकै
रशेष लोकस्यतमौ निरामक:

स चेश्वरोमौनिवर स्सुपुत्रकं
सुमेधसं प्रागुपनीय नित्यशः
अपाठयद्वेद मधाभिभाषते
पुनर्वदन्तं पितरं तदासुत:

ममाद्य पाठोऽभिनवश्च कथ्यतां
पित:! किमेतद्ब्रुवता दिनेदिने
पुरोक्तवेद: पुनरेवकथ्यते
भवेत्कुतश्चर्वित चर्वणेरुचि:

पिता तदीयां प्रतिभां विलोकयन्
प्रहृष्टचित्त: परिषस्वजे सुतम्
षडङ्गवेदा नुपदिश्य चाकरो
त्सभाष्य भट्टस्य समीप वर्तिनम्

कुशाग्रबुद्धि र्गुरु सन्निधौ तदा
वशंगत स्तत्परिचार कर्मण:
दधार शास्त्राणि तदन्तिके यथा
हरिश्च सांदीपनि गेह मास्थित:

तदाऽभव द्राजपुरोहितो हितो
महीपते र्नित्य महीन तेजसः
सचाक्किकयाळ्वा निति नामवान्बुधः
सुपण्डितं मन्यतमस्तमोमयः १३

स चोळभूपाल वरेण सत्कृतः
कृती जिता खंडित पण्डितोत्तमः
पराजितेभ्यः प्रतिवत्सरंकरं
जहार विद्भ्यो जयशब्द पूर्वकम् १४

तदेकदा राजपुरोधसो भटा
स्समेत्य भट्टं समपीडयन्मुहुः
विलोक्य तद्या मुनबाल केसरी
नदन्लिखित्वेद मदाच्च पत्रकम् १५

"नवयं कवयस्तु केवलं
नवयं केवल तंत्रपारगाः
अपितु प्रतिवादि वारण
प्रकटाटोप विपाटन क्षमा." १६

समागतैः क्रोधमहाभटैर्भटै
र्निशम्य तद्यामुन बालभाषितम्

बभाण राज्ञे भरितः क्रुधाबुधः
पुरोहितो रोहित लोचनस्तदा

सबालकः पालक! राजशासनं
तृणीकरोत्यद्य नितान्त गर्वितः
वितंडवादी खलुदंडयता मयं
समागतोनः प्रथमः पराभवः

इतीरयन्तं परुषं पुरोधसं
जगादतच्छ्लोक मवेक्ष्य भूपतिः
स चार्भकस्साधु परीक्ष्यतां पुन
र्विलेक्यवाकश्च भुजंगमोऽस्तिवा

तथा समाधाय पुरोहितं विभु
स्सयामनार्यानियनाय मन्त्रिणम्
समादिश त्सोऽपि गतोऽथयामुनं
तदाह राज्ञो निजशासनंवचः

सयामुनार्यं त्विवदमुक्तवान्यया
दमात्यवर्याहि मधीश शासनम्
सगौरवं स्वीकृत वान्नचान्यथा
तथाऽपि वक्तव्य मिहास्ति मेऽधुना

विभोस्समीपं विबुधोमहाकविः
पदातिरेवं नहिगन्तुमर्हति
स्वदेशमात्रे खलु पूज्यते नृप
स्समर्च्यते सर्वतलेषु पंडितः २२

नसत्कृतो यत्र बुधा महीभृता
(१) सतस्थलोपो नविपश्चितांक्षतिः
स वानरैः पादतिरस्कृतोमणिः
स्वकीयशोभांहि जहाति नक्वचित् २३

महत्सु विद्वत्सु वसत्सु सर्वतः
किमेकएवास्ति भवत्पुरोहितः
सुरत्नगर्भा खलु भारती क्षिति
र्विशिष्य तद्रत्न हरोहि पार्थिवः २४

(१) स्वयंहि राजा बुधपक्षसंश्रितः
करोति कस्मात्स सतामनादरम्

---

(१) वानरैः = कपिभिः नरैर्वा = मनुष्यै र्वेतियोजना-

(१) राजा = भूपतिः चन्द्रः बुधपक्षसंश्रितः = विद्वत्पक्षपाती, सोमसुतपक्षस्थः सतांवरः = सत्पुरुषाणां श्रेष्ठः नक्षत्रणां श्रेष्ठः

न संकुचे त्स्वीयरुचा क्वचिद्विधु (१)
स्सतांवरा स्सर्वसमा भवन्तिहि २५

(२) महीभृतोदृप्तबुधेन्द्र योगत
स्सुपक्षपातो विदितो भवेद्भृशम्
सदाप्रमोदा त्सरसा नुवर्तिनो
नपक्षपातो भविता कदाचना २६

इति ब्रुवाणं मृदुबालयामुनं
प्रणम्य मन्त्री प्रययौ नृपान्तिकम्
महीपति स्सर्व मवेत्य विस्मित
स्सगौरवं नेतु मथादिशन्पुनः २७

सराजचिह्नैः प्रहितां महीभुजा
सुवर्ण चित्रां शिबिका मधिष्ठत।
गजैस्तुरंगै स्सभटै स्सयावृतो
रराज राजेव विदां स यामुनः २८

---

(२) महीभृतः = राज्ञः. पर्वतस्य. बुधेन्द्रयोगतः = पंडितवर संबन्धात्. देवेन्द्रसंबंधात् पक्षपातः = एकस्मिन्न भिमानः. पक्षयोर्गरुतयोः. पातः = पतनम्. रवेंमिन्द्रेणपर्वतानां गरुतौ खंडिताविति प्रसिद्धिः. सरसानु वर्तिनः = रसिकजनानुसारिणः. समुद्रानुसारिणः, मैनाकस्य पक्षपातो नास्ति.

कळंकहीनं कमनीयवर्चसं
तमोनुदं स्वप्रभयाचबालकम्
द्विजाधिपं यामुनमाप सोत्सुक
स्सतांगणो व्योम्नि यथाकळाधरम् २९

प्रविश्य सौधंजननाथदम्पती
विलोक्यतं द्वादश हायनार्भकम्
प्रभाविनं यामुन मेव माहतुः
परस्परं बद्धसमृद्धकौतुकौ ३०

अयंहिवालो बलिनं पुरोहितं
नजेष्यतीति ब्रुवति क्षमापतौ
तमाह राज्ञीशिशुरेव केसरी
धुनोति गन्धद्विपदुष्टतामिति ३१

तयोर्विवादे शपथः कृतोऽभव
त्पुरोधसायामुन धीमतोजये
तयाप्रियस्याखिलदास्य मादृतं
स चार्धराज्यार्पण मादधे विभुः ३२

---

कळंकहीनम् = दोषरहितम्. बालचन्द्रत्वात् शशलां छन रहितम्. तमोनुदम् = अज्ञाननिवर्तकम्. ध्वान्त निवर्तकम्. द्विजाधिपम् = ब्राह्मणश्रेष्ठम्. द्विजराजनामानम्. सताम् = सत्पुरुषाणाम्. नक्षत्राणाम्. गणः = समुदायः कला धरः = विद्वान्—चन्द्र.

पुरोधसा पूर्वजिता विदांवरा
स्समुत्सुका यामुनतीर्थ संगताः
निदाघशुष्का गिरिनिर्झरायथा
धनागमे पूर्णजला महाजवाः ३३

ततःपुरस्तात्फलके निवेशितं
भयावहं तत्प्रतिवादिनां भृशम्
महौजसा यामुनसूरिणाऽमुना
स्वयंकृतं पद्यमिद प्रकाशते ३४

"आशैलादद्रिकन्याचरणकिसलयन्यासधन्योपकंठात्
आरक्षो नीतसीतामुख कमलसमुल्लास हेतोश्चशेतोः
आचप्राच्य प्रतीच्यक्षिति धरयुगळादर्कचन्द्रावतंसा
न्मीमांसा शास्त्रयुग्मे श्रमविमलमनामृग्यतां मादृशोन्यः ३५

(१) इतिप्रगच्छ न्मनुजेन्द्रशोभितां
विचित्ररूपां विबुधैरलंकृताम्
विवेशतद्राज सभां स यामुनो
गुरुस्सुधर्मामिवशक्र पालिताम् ३६

---

(१) विबुधैः = देवैः पडितैः.

सबाल विद्वा नधिपेन सत्कृतो
महार्घसिंहासन माश्रितो बुधैः
व्यरोचताद्रा वुदये महोदयः
प्रभा विशेषै रवबालभास्करः ३७

पुरोहितो मत्त गजेन्द्र विभ्रमः
प्रविश्य विद्यामद मुद्वमन्निव
ददर्शहेमासनवर्ति यामुनं
यथासुमेरुस्थ मृगेन्द्रशाबकम् ३८

अवोचदेवं बुधबालकेन मे
नरोचते शास्त्र विवाद कौतुकम्
यदुच्यते तद्विपरीत कार्यहं
पराजितस्योपरि ताडनं पणः ३९

हसन्नवोच द्विबुधं सयामुन
स्तथैव पृच्छामि सुभाषितत्रयम्
यदिच्छसित्वं परतोऽपिपश्यसि
प्रवृद्ध शास्त्रेषु मृगेन्द्र विक्रमम् ४०

तथाभवत्वि त्यखिले सभाजने
वदत्यधीशस्य मुखं विकासयन्

अलौकिकं लौकिक शास्त्रसम्मतं
नुतजनैर्वाक्यमुवाच यामुनः ४१

(१) त्वयैवमाता सुतवत्ययं प्रभु
स्त्वदा श्रयो धर्ममतिः प्रियाविभोः
तथासती भर्तृवचोविनोदिनो
प्रयच्छ विद्वान्विपरीत मुत्तरम् ४२

(१) निशम्य तद्यामुन सूरिभाषितं
तदाशयाज्ञान वशान्निरुत्तरः
मृगेन्द्रपार्श्वे च नरेंद्र सन्निधा
वनुद्धतो नाग इवाभवद्बुधः ४३

---

(१) प्रत्युत्तरार्थे त्वयैव=एकेन त्वया. असुतवतीति पदच्छेदः. एकपुत्रापि वंध्यैव. कदळी वन्ध्या पुत्रिकावंध्या. मृतवन्ध्या वन्ध्या इति शास्त्रात् चतुर्विधंवंध्य त्वम्. अयंप्रभुः त्वदाश्रयः सर्वान्त्रिदुषोदूरीकृत्य त्वदेकाश्र यत्वात् अधर्ममति. तथाविभोःप्रिया=राज्ञी- असतीतिपदच्छेदः=सतीनभवति. कुतः भर्तृवचसां अविनोदिनी व्यतिरेक वादेप्रवृत्तत्वत्.

(१) मृगेन्द्रपर्श्वे=सिंहसमीपे. नागइव=गजइव. नरेन्द्र सन्निधौ= विषवैद्यसमीपे. राजसमीपे. ना गइव=सर्पइव ।

शुचिस्मितो यामुन विद्वदग्रणी
रुवाच वाचं मधुरं पुरोहितम्
किमर्थमल्पेऽपि निरुत्तरोऽभवः
कथं प्रतर्केष्विह मां विजेष्यसि ४४

नचैकपुत्रा भवतीह पुत्रिणी
नचैकपक्षो विभुरीश धर्मवित्
नचापि साध्वीपतिवाग्विवर्तिनी
तदत्रपद्ये स्फुरति प्रदृश्यताम् ४५

पराजितानां शिरसि प्रताडनं
त्वयायदुक्तं नमया विधीयते
द्विजोऽसि वृद्धोविभुमाश्रितःपरं
तथाऽपि विद्वद्भिरुदानि संत्यज ४६

इति प्रशान्त्या प्रवदन्त मर्भकं
नृपान्तिके यामुनसूरि मद्भुतम्
सभासदा स्संप्रशशंसुरादरा
ज्जहर्षतु स्संसदि राजदंपती ४७

पुरोहितोयामुन सूरिवैभवं
(१) हृदाभिनंद्याशु बभूवनिर्मलः
सकिल्बिषं कं नपुनाति भूतले
सकृत्कृतंयामुन तीर्थ सेवनम् ४८

प्रमोद युक्संसदि चोळभूपतिः
प्रशंस्य तद्यामुन सूरयेप्रभुः
ददौस्वराज्यार्धमनिंदिताशयः
किमप्रदेयं विदुषे महो भुजा। ४९

तदर्धराज्यं त्वधिगम्यबुद्धिमान्
सयामुनार्यस्सुर भारतीश्रियोः
क्रमागतं भूर्ययशो व्यशोधय
त्परस्परं काश्य शून्यताकृतम् ५०

विभुश्रिया यामुनसूरिराड्तदा
गृहेषु मातापितरौ चनन्दयन्
विवाहितो वाहितराज्यभारक
स्सुत द्वयं प्राप सरूप मात्मनः ५१

---

(१) यामुनतीर्थसेवनम् = यामुनाचार्यसेवनम् यमुनानदीजलपानम्. सकिल्बिषम् = कपटयुक्तम्. पापयुक्तम्.

श्रियाधिया स्वानुगयाच भार्यया
विधेय सत्पुत्रतयाऽऽर्य सेवया
निनायकालं सुखसंपदातदा
विधाय विद्वान्सभुवं दिवं यथा ५२

सरोजनेत्र श्रित रामदेशिको
निशम्य तद्यामुन सूरिवैभवम्
स्मरन्गुरोश्शासन माशु रंगत
स्समाययौ दर्शनलालसोऽलसः ५३

सयामुनं राजगृहे स्थितं भटै
र्निरुद्धमार्गं स्त्वधिगन्तु मक्षमः
विचिन्त्य तस्याप्ति कृते तदीप्सिता
न्यलर्क पत्राणि ददौ महानसे ५४

दिनेऽपि तच्छाखभुजा महीभुजा
मुदामुना यामुनसूरिणैकदा
ऋतुत्रया नन्तर मात्त संगति
स्सराममिश्रोऽनुमतागमोऽभवत् ५५

---

अलर्कपत्राणि = आंध्रभाषायाम् (पुलिचितकूर)

प्रविष्टमन्तः पुर मात्म विद्दुरं
प्रणम्य रामार्य मदभ्रविष्टरे
निवेश्य भक्त्या विनयेन यामुन
स्समाबभाषे सकलागमार्थवित् ५६

महौजसस्तेऽद्य समागमादिदं
गृहं पवित्रं सफलाश्च सत्क्रियाः
भवस्थितानां भवदीय दर्शनं
भवत्यशेषाघ निकाय कर्शनम् ५७

यदीप्सितं तद्वद वैष्णवाग्रणी
स्समुत्सुकः कर्तुमहं कृपानिधेः
गृहागतायाऽतिथये समर्पणा
त्त्वविद्यतेऽन्यद्गृह मेधिनः फलम् ५८

नमेस्तिवांछा धनराज्यसंचये
किमर्थमे तत्परमार्थ वेदिनः
पितामहात्ते परित स्समार्जिता
न्मदर्पितार्था न्प्रतिदातुमागतः ५९

यदिप्रदातुं तवमय्यनुग्रहो
गृहीतु मर्थान्समयः प्रदीयताम्

रहस्य निक्षेप समर्पणात्पुन
स्तदर्हंपात्रोहि भवामि निर्भरः ६०

इति प्रभाष्यानुमतो महागुरु
रहस्यगीतार्थ मथा ब्रवीत्ततः
यथानुरक्त श्श्रवणे दिनेदिने
तथा विरक्तोऽभवदन्यसाधने ६१

सरामंमिश्रः प्रियशिष्य मादरा
दलर्क पत्रार्पण निष्क्रयेणतम्
विधाय च क्रीतमिवात्म सात्कृतं
उपादिशत्तं चरमार्थ मद्भुतम् ६२

ततोविरक्तः परमार्थ साधको
विहाय राज्यं प्रियबन्धुजालकम्
स राममिश्रेण सहैवयामुनो
विवेश तद्रङ्ग पुरंच सादरम् ६३

तदावद द्रामगुरुश्चयामुनं
महामते! ऽस्मद्गुरुवंश जीवनम्
पितामहेनैव तव प्रकाशितं
प्रकाश्यते तेप्य धुना मयेतिच ६४

१) कवेरजा मध्यतले समुज्वलं (१)
विमानमोंकारमयं तदन्तरे
बिलेशयेशा श्रयमक्षयं गुरुं
प्रदर्शयामास स नाथशेवधिम् ६५

पादादि चूडान्त मथानुभूयतं
हरेर्मनोहारि शयानविग्रहम्
समग्रभक्त्या विवशी कृतान्तर
स्तथैव रङ्गेन्यवस त्सथामुनः ६६

रमेशकैंकर्य विरोधशङ्कया
धनानि राज्यं सकलांश्च बान्धवान्
परित्यज न्प्राप स यामुनो मुनि
र्वरेण्य मेवात्र तुरीय मश्रमम् ६७

सरङ्गराड्यामुन सूरिमादरा
दयंहिरक्षागत इत्यथावदत्
तदर्थक द्राविडदेशभाषया
तमाळवन्दारिति चाब्रुवन्जनाः ६८

---

(१) शेवधिम् = द्रव्यनिधिम् बिलेशयेशः = शेषः आश्रयः = शय नत्वे-नाधारः. यस्यतथोक्तम्. निधिरपिसर्पाश्रयोभवति.

अथैकदा रामगुरोरनुज्ञया
ययौ प्रहृष्टो हठयोग लब्धये
सनाथ शिष्यं कुरुकाधि नायकं
विलोक्य योगस्थमतो बहिस्थित: ६९

सयोगराडित्यम भाषतार्तित:
किमागतो नाथ मुनीन्द्र वंशज:
यदस्मदग्रे रमयास्थितोहरि
र्विवृत्य वक्त्रं परतोव्यलोकयत् ७०

निशम्य तद्वाक्य मयं समागत:
प्रणौति दासोहठयोग तत्पर:
इतिब्रुवाणं कुरुकाधिपोऽवद
त्नदेयमन्ते पुनरेहि मामिति ७१

तदन्तकाला वधिमप्यवेत्य त
न्निवेश्य पत्रे सहियामुनोमुनि:
सशिष्य कोऽनन्त पुरेस्थित स्तदा
सचावधि विस्मरणाद्गतोऽभवत् ७२

---

कुरुकाधिनाथ: = कुरुहवालप्पनितिद्रविडनाम·

कलौजनानं हठयोग साधनं
कठोर मित्येव तथाऽभवन्नमे
प्रपत्तियोगः परमार्थ साधने
प्रमादशून्यो भवतीत्यचिन्तयत् ७३

सचोळराज स्सपुरोहितस्तत
स्सतीच राज्ञस्सकलाश्च बान्धवाः
अशिश्रियन्यामुन सूरिमागता
स्सतांहियोगो नवृधा भवेत्क्वचित् ७४

(१) शिष्या यामुनयोगिनः प्रियमहापूर्णोरहस्यार्थवित्
गोष्टीपूर्ण सुमालिका धरगुरुश्श्रीशैलपूर्णोमहान्
कांचीपूर्णगुरुश्चतुर्थकुलजो मार्नेरु नंब्यंत्यजः
सन्त्यन्येऽपि सहस्रशोऽग्रगणिताः पंचैवपूर्वोदिताः ७५

श्रीयामुनार्यं मुनिवर्य पदाश्रतेषु
ज्यायान्गुणेषु च महापरिपूर्ण असीत्
श्रीरङ् धामनि सशिष्य गणोयतीशो
नाथार्य वंशतिलको नयतिस्मकालम् ७६

---

(१) पेरियनंबी. तिरुक्केट्टिचूरुनंबी. तिरुमालैयांडान् तिरुमलैनंबी- तिरु-
कच्चिनंबी· मार्नेर्नंबी· क्रमशः पंचयामुनार्य मुख्य शिष्याः.

सिद्धित्रयं निखिलतत्व विवेकरूपं
गीतार्थसंग्रह मनेकरहस्य सूक्ष्मम्
प्रामाण्य मागम चयस्य च यामुनार्यो
रत्नंस्तुतेर्निगमसार तमंवितेने ७७

(१) सप्ताक्षरावरण शोभित वेदशृङ्ग
प्रद्योतित प्रणवदिव्य विमाननिष्ठम्
वाचामवेद्य गुणरूप विशेषशोभं
श्रीरङ्गमंङ्गळमणिं शरणं भजामः ७८

इति श्रीमत्सदाचार्य कृपालब्ध सारस्वतस्य

कृष्णमाचार्य शतावधानिनःकृतिषु

गुरुवंशमहाकाव्ये

द्वितीयस्सर्गः

—: श्री :—

---

(१) नारायणाष्टाक्षरीमन्त्रे प्रणवं विहाय सप्ताक्षराण्येव सप्तप्राकाराः तैश्शोभितम्. वेदाः चतुर्वेदाः तएव शृगाणि- तैः–प्रद्योतितम्-प्रकटितम् प्रणवएवदिव्यविमानम् तत्र निष्टम् अकारप्रतिपाद्यम्.

श्रीमते रामानुजायनमः

# गुरुवंश महाकाव्ये

## तृतीय स्सर्गः

(१) श्रीमन्महा भूतपुरी चकास्ति
महोज्वला प्राग्जलधेः प्रतीच्याम्
काञ्ची लसद्दक्षिणरत्न गर्भा
गर्भस्थलीवत् बुधरत्नसूतिः १

(२) अभूतपूर्वा सुकृत प्रशस्ति
स्तद्भूतपूर्वास जुषांजनानाम्
तत्राविरासी द्वसुधा धरोऽहि
स्सुधाकरो वैष्णव दुग्धराशेः २

---

(१) कांच्या=कांचीपुर्येव मेखला तया। लसन्त्याः=प्रकाशमानायाः. दक्षिण रत्नगर्भायाः दक्षिणभूमेः स्त्रियः गर्भस्थलीवत्· गर्भप्रदेशइव। बुधरत्नसूतिः· महैः=उत्सवैः उज्वला=प्रकाशमाना·

(२) वसुधाधरः=भूभारवाहकः-अहिः=अदिशेषः. सुधाकरः= चन्द्रः.

अनन्त कासार जलावगाहं
तथादिम त्केशवदेव सेवाम्
श्रीभूतपुर्यां नियतं निवासं
अनन्तपुण्यस्य फलं वदन्ति ३

(३) प्रभूतकेदार सरोवृतासा
वृताबुधैर्भूतपुरी भवाय
वृथाहितज्जन्म महीतलेस्या
त्तस्यांनिवासस्तु नचेत्कदाचित् ४

मध्येपुरं गोपुरमंटपानां
प्रभाविशेषै परितो गृहैश्च
श्रीवैष्णवानां विदुषां समूहै
विभाति वैकुंठ पुरीवमुक्तैः ५

तत्राभवत्केशव नामयज्वा
मूर्तोभवद्ब्रह्मिरिव क्रतूनाम्
आसूरिवंशांबुधि पूर्णचन्द्र
स्सान्द्रोगुणै र्वैदिक वैष्णवेन्द्रः ६

---

(३) भवाय = जन्मने. वृता = अभिमतत्वेन स्वीकृता. बुधैः = देवैः–विद्वांसैश्च.

(१) तस्यद्वितीयाऽभवदद्वितीया
छायेव नित्यानुगता सैतीसा
धाम्नाचया कान्तिमती स्वनाम्ना
श्रीशैलपूर्णार्य सहोदरीच ७

नयेन लक्ष्मीर्विनयेनविद्या
जयेनसत्कीर्ति रिवानुषक्ता
भयेन भक्त्या प्रणयेन साध्वी
प्रियेणसा कान्तिमती विरेजे ८

सचैकदा कैरविणी समीपे
चकारपत्न्यासहित स्सुतेष्टिम्
तत्पार्थसार थ्यनुकंपयासा
सीमन्त योग्याऽभवदस्य कान्ता ९

शुभेमुहूर्ते सुषुवे कुमारं
मारंयथा श्रीस्सुकुमार मार्या
मेषेतथा द्रर्क्षदिनेकृपाद्रं
भद्रजनानां सुषुमासमुद्रम् १०

---

(१) धाम्ना = स्वकीय कान्त्या, नाम्नाच = अभिधे येनच कान्तिमती = प्रशस्त कान्ति युक्ता.

श्रीशैलपूर्णस्समुपेत्य तादृ
ङ्महोदयँ स्वस्यच भागिनेयम्
सुलक्षणं वीक्ष्य चकार लोका
द्विलक्षणं लक्ष्मण नामधेयम् ११

(१) स्वभाव सौन्दर्य विशेषितैर्गुणै
रतीव राम त्रितयानुवृत्या
रामानुजं प्राहु रथो विदोऽन्ये
क्षेमाय लोकस्य तथा वतीर्णम् १२

अकिंच नानन्य गतिप्रजानां
भाग्यतिरेका द्ववृधे कुमारः
श्रीकेशवार्योप्युपनीयपुत्र
मपाठयत्सांगशिरस्कवेदान् १३

शास्त्राण्य धीत्यापि सलक्ष्मणार्यः
कांचीगतो यादव सन्निधाने
शुश्रूषमाणो निगमान्त शास्त्रं
पठन् तदर्थे नजगाम तृप्तिम् १४

---

(१) रामत्रितयानुवृत्या = श्रीराम परशुराम बलरामाणाम नुवृत्या. श्रीरामवल्लोकरंजनेन· परशुरामवत् प्रतिपक्षवि क्षेपेण. बलरामवत् भगवदनुवृत्या रामानुजं प्राहुः

श्रीलक्ष्मणार्यस्य महामहिम्नो
मातृष्वसुस्स्वस्य सुतोऽतिधीमान्
गोविन्दराजो गुरु सन्निधाने
तत्रैव पाठान्पठतिस्म काञ्च्याम् १५

तत्रैकदा यादवमूर्ध्नितैलं
रामानुजेमर्दयति प्रहृष्टः
सयादवोऽर्थं वदतिस्म शिष्यान्
शृण्वन्स्थितो लक्ष्मण देशिकेन्द्रः १६

(१) कप्यासमित्यादिक वाक्यपाठे
छान्दोग्यगे मर्कटकासनंवा

---

(१) कप्यासमिति, "कप्यासं पुंडरीकमेव मक्षिणी तस्योदिति नाम, छान्दोग्ये सूर्यमण्डलवर्ति नारायणस्य दिव्य मंगळविग्रहपरमिदं वाक्यम् अत्र कप्यासंयथा=वानरा सनमिव पुण्डरीकंयथा कमलमिव. एवमक्षिणी=तत्सदृशे. भगवन्नेत्रे । वानरासनमिव रक्ते पुंडरीकमिव विशाले. इत्यर्थः. यद्वा वानरासनतुल्यं पुंडरीकम्. रक्तांभोजमित्यर्थः तत्तुल्ये नेत्रे इति यादव प्रतिपादि तोर्थः. वानरासनस्य पुंटरीकोपमानत्वेन न विहीनोपमानता दोष इति शंकराचार्यस्यापि सम्मतः. तदपेक्षया सुंदरार्थस्सि ध्यतीति रामानुजार्याणामाशयः. तदित्थम्. कम्=जलम् पिबतीतिकपिः सूर्यः तेनास्यते=विकस्यतइति कप्याम् । के=जले प्यास्ते वर्ततइति कप्यासम् गंभीरांभस्स मुद्भूत सुमृष्टनाळ रविकर विकसित पुंडरीक दळामलेक्षणो नारायण इति समुदितोर्थः

रक्तंहरेर्नेत्र मभून्मुरारे
रित्युक्तमाकर्ण्य मुमोच बाष्पम् १७

ततः किमर्थं रुदसीति पृष्ठ
स्सलक्ष्मणो यादवमब्रवीत्तम्
सद्यस्फु रत्सू र्यकरै रिवाब्जं
नेत्रंहरेरि त्यनुरूपमर्थम् १८

तत्रैवराज्ञो दुहितुः पिशाचो
धिक्कृत्य तद्याह्वतमन्त्र शक्तिम्
श्रीलक्ष्मणार्यं शिरसा प्रणम्य
श्रीपाद तीर्थेन जगाम मोक्षम् १९

रामानुजस्य प्रतिभां प्रभावं
विलोक्य मात्सर्य युतस्ततोऽभूत्
सयादवो नैवजाहातिदुष्ट
स्सन्यासि तायां सहजस्स्वभावः २०

श्रीयादव शिष्यगणै रुपेतः
श्रीलक्ष्मणार्यानुगतः प्रतस्थे
किमप्यवेद्यं हृदये निधाय
सवारणासीं भववारणासिम् २१

मध्येपथं विन्ध्य नगस्य दुर्गे
वनेवियुक्तः किललक्ष्मणार्यः
निश्यंन्धकारे नियतो रपश्यत्
किरातमेकं तरुणी समेतम् २२

तेनैवरात्रावति सत्कृतोऽयं
रामानुजोमं चतले शयानः
सुस्वाप चान्त र्हृ दिदेवरक्ष्यो
जीवोयथा सुप्तिदशानुषक्तः २३

तदानिशीथे जलमाहरेति
पतिंवदन्तीं वनितांनिषादः
चुकोप तद्वाक्य मसौनिशम्य
रामानुज स्सत्वर माबभाषे २४

हेसौम्य! किंकुप्यसि तां त्वयास्मिन्
सुसत्कृतोऽहं प्रतिकर्तुकामः
यदिच्छसित्वं जलमाहरामि
प्रयच्छ पात्रं वदकुत्रकूपम् २५

इत्युक्तवंतं तमुवाचवन्यो
धन्यस्तथाचे त्कुरु तत्प्रभाते

कथंजलस्याहरणं निशीथे
स्त्रियस्स्वनिष्ठा स्समया नभिज्ञाः २६

वने चरेणैव वने प्रगुप्तो
व्युष्टे समुत्थाय किमप्यपश्यन्
काञ्ची पुरं तत्रविभो यदृष्ट
स्तौईषती श्रीवरदौ समेते २७

गोविन्दराजो गुरुकूट बोधात्
शैवंमतं स्वीकृतवा नुपेत्य
श्रीकाळहस्ती श्वर शैव पीठे
शैवागमाचर्य वरो बभूव २८

श्रीदेवराजेन सदैवकांची
पूर्णोन्तरङ्गे परिभाषतेस्म
जिज्ञासुरर्थी न्करिशैलनाथा
द्रामानुजः पूर्णगुरुं ययाचे २९

किंतत्वमात्मे श्वरयो रभेदो
मोक्षःकदा तस्यच साधनंकिम्
किमन्तकाले स्मृतिरप्यवश्या
कमाश्रयाम्यद्य गुरुं वदेति ३०

पूर्णार्यं पृष्टः करि भूधरेशो
जगाद संदिग्ध तरान्षडर्थान्
क्ष्म श्रीलक्ष्णाचार्यं निवेदनाय
राजीवनेत्रो रमया समेतः ३१

भेदोहिसत्य स्त्वह मेव तत्वं
देहावसाने खलु मोक्षसिद्धिः
स्मृतिविनान्ते भवतिप्रपत्या
पूर्णं महान्तं गुरुमाश्रयेति ३२

रामानुजार्यो वरदानुकंपां
स्मरन्गृहस्थो न्यवस त्सभार्यः
कैङ्कर्यसक्तो वरदस्य कांची
पूर्णार्यं संलब्ध महार्थबोधः ३३

श्रीरङ्गपुर्यां खलुयामुनार्यं
स्समादिश त्पूर्णं गुरुं महान्तम्
रामानुजार्यानयनायशीघ्रं
स्वस्तोत्ररत्नस्यच्चनिष्क्रियेण ३४

(१) श्रीमान्महापूर्णगुरु स्समेत्य
स्तुत्यातयाऽ तोषयदादिदेवम्
रत्नं स्तुते स्सान्त मपिप्रदाय
संप्राप्यसोनन्त विशेषरत्नम् ३५

(१) यत्पुष्ट गोसार रसानुभूत्या
तृप्तस्य गोपुष्ट तमत्व सिध्द्यै
रामनुज स्सारविदाशु कर्तुं
मियेष तद्यामुन तीर्थ सेवाम् ३६

श्रीयामुनाचार्य पदाब्ज सेवा
व्यामोहत पूर्णगुरुत्तमेन
श्रीलक्ष्मणार्यस्त दियायरङ्गं
मुक्तोयथा प्राप्य ममानवेन ३७

---

(१) सान्तम् =संपूर्णम्, अन्तसहितंच. स्तुतिरत्नम् =स्तोत्ररत्नम्. अनन्त विशेषरत्नम् = अनन्तस्य = शेषस्य विशेष =अवतारविशेषः. रामानुजाचार्यः सएवरत्नम् = श्रेष्टवस्तु. अन्तरहित श्रेष्टरत्नंच.

(१) यने=यामुनतीर्थेन यामुनाचार्येण. यमुनाजलेन. पुष्टनांम् = पोषितानाम्. गवाम्- धेनूनाम्. स्तोत्ररत्नरुप वाक्यानाम् रसानुभत्या = स्वारस्यनुभवेन. क्षीरादि रसानुभवेन तृप्तः = सतृप्तः. स्वस्यगवाम्. वाक्यानाम्. धेनूनाम् पुष्टतमत्वसिद्धयेः रामनुजः = बलरामानुजः कृष्णः लक्ष्मणार्यः. यमुनातीर्थस्य. यामुनाचार्यस्य-यमुनानदी जलस्यः.

सपंचसंस्कार विधान मादौ
मार्गेतटाकस्य तटेऽप्यवाप
यदागुरोराश्रयणेऽभिलाषा
तदाश्रयेदित्यपि सूचनाय ३८

महामहिम्नो रुभयोश्चयोगे
सर्वेऽपिमुक्ताः परितो भवेयुः
इतीव भीत्या किल रङ्गनाथ
श्श्रीयामु नार्याय ददौ विमुक्तिम् ३९

मुक्तिगते यामुनदेशि केन्द्रे
रामानुजार्यस्त्वय मापरंगम्
तदात्वपश्यच्चरमेशरीरे
हस्तेनिबद्धं त्रयमंगुळीनाम् ४०

श्रीभाष्यनिर्माण शठारिनाम
द्वार पराकुशाख्योद्धरणामि कर्तुम्
रामानुजे कुर्वति संप्रतिज्ञा
मासीत्तदा मोचन मंगुळीनाम् ४१

नारायणा ष्टाक्षर मन्त्रराज
प्राप्त्यै स गोष्टी पुरपूर्णनाम्नः

गुरोस्सकाशं बहुवारमाप
प्रारब्धमार्या नपरित्यजन्ति ४२

यदायदा गच्छति लक्ष्मणार्ये
मन्त्राप्तये सोऽपि गुरुस्तदानीम्
महार्थदं रत्नमिवाऽतिगोप्यं
प्रकाशयामास न मन्त्र राजम् ४३

मोक्षे धरित्री जनुषां समेषां
समाधिकारं कृपयैव दित्सुः
मन्त्रस्यलाभाय गुरोस्समीपे
सत्याग्रहं संविदधे सधीरः ४४

(१) मासोप वासंच विधाय पश्चा
न्नान्यस्य वच्मीति कृत प्रतिज्ञः
रामानुजो मन्त्र मवाप तस्मा
न्निधेरिवादभ्र मणिं महार्थम् ४५

निशम्य मन्त्रस्य महा प्रभावं
पश्यन्ज नानां परिदीन वृत्तिम्

---

(१) महार्थम् = मन्त्रपक्षे अनेकर हस्यार्थयुक्तम् मणिपक्षे महद्द्रव्यम्

दयासमुद्रो नरहस्यमर्थं
शशाकगोप्तुं भवतारणार्थम् ४६

गुरोरनुज्ञा मतिलंघ्य मंत्र
मवोच्चदार्यस्सच गोपुरस्थः
मुक्तिप्रदं सर्वजनस्य तत्र
परोद्दिधीर्षैक फलाहिसन्तः ४७

गुरोर्वचेऽतिक्रमणे चदोषं
पश्यन्किमेवं कृतवानसीति
पृष्टःप्रणम्याशु गुरुं महात्मा
रामानुज स्सादर मावभाषे ४८

आचार्यवाक्य प्रतिकूल दोषा
देकस्य मेस्यान्निरयोऽपि लोके
व्यक्तीकृते नाद्यमहा महिम्ना
मन्त्रेणसर्वेऽपि भवन्तु मुक्ताः ४९

इतिब्रुवाणं धुरि लक्ष्मणार्यं
प्रशंस्यतां तस्य परार्थवृत्तिम्
कृपा प्रसन्नार्थं जनाग्र पीठे
प्रमोद बाष्पै र्गुरुरभ्यषिंचत् ५०

रामानुजो वैष्णव ददर्शनस्य
संस्थापनेप्सुः प्रतिकूल वृत्तिम्
जायां परित्यज्य च सत्रिदण्डः
पतिर्यती नामभव द्विरक्तः ५१

काषायवर्णांबर भासमान
स्सन्मानसां भोज विकासहेतुः
तमोविहार प्रशमायरेजे
रामानुजार्यो दिनराडिवोद्यन् ५२

(१) श्रीदेवराजेन रमान्वितेन
तदा समाहूय त्रिदांपुरस्तात्
रामानुजार्योरमणीय मूर्तिः
बहूकृतोसौ यतिराज नाम्ना ५३

(१) रामानुजार्यस्य च भागिनेय
स्तंशिश्रिये दाशरथिः पुरस्तात्

---

(१) रामनुजपक्षे-काषायवस्त्रेण शोभमानः रविपक्षेरक्तवर्णा काशेन प्रकाश मानः· सन्मानसां भोजविकामहेतुः = सताम् = सत्पुरुषणांम्. मानसानिमनांस्येव मानसांभोजानि नेषाम् विकासकारणम्. सन्ति विलक्षणानि मानसां भोजानि· मानससरस्थित कमलानि तेषांविका-सहेतुः–रविः·

(१) दाशरथेः मोदलियाण्डानितिद्राविडनाम.

योलक्ष्मणार्यां श्रित दासमध्ये
तत्पादुका स्थान मवाप भूम्ना ५४

ततोमहापूर्ण कृपातिरेकात्
श्रीयामुनार्याशयपूरणाय
श्रीरङ्गराज श्रियमुद्धरिष्यन्
श्रीरङ्गपुर्यान्यवसद्यतीशः ५५

गोविन्दराट्चछैव मतान्निवृत्त
श्श्रीशैलपूर्णस्य गुरोर्महिम्ना
रामानुजाचार्य पदारविन्द
च्छायेव तस्यानुगतो बभूव ५६

(२) कूराधिनाथोऽपि महाविरक्तो
रक्तोऽभवत्सं यमिनायकेस्मिन्
येनानुयातो यतिराड् स वाण्या
प्रदत्त बोधायन वृत्तिरासीत् ५७

---

(२) बोधायन वृत्यानयनाय कास्मीरे शारदापीठं गतवतो भगव द्रामानुजाचार्यस्य कूरेशः अनुगः आसीत् तत्र सरस्वतीबालि कारूपेणागत्य "कप्यास"मित्यादि श्रुत्यर्थं शृत्वा भाष्यकारइत्यभिधांदत्वा स्वयमेव बोधायन वृत्तिमदात् मेधावीकूरेशः एकवारं दृष्ट्वा पुस्तक गमनेऽपि वृत्ति ग्रंधमवददिति प्रसिद्धि :

बोधायनोक्तेनपथा श्रुतीनां
समन्वयंसाधु विधाय भाष्यम्
सूत्राक्षराण्येव विवृत्य चक्रे
श्रीभाष्य नाम्ना श्रितभाग धेयात् ५८.

(१) रामनुजाचार्य कृपाविशेषा
द्गुणान्वितं श्रीपतिं मात्मनाथम्
लब्ध्वातुतोष श्रुतिरंगपुष्टा
पुन पतिं प्राप्य वियोगिनीव ५९.

(२) गीतमहा भाष्यमपिव्यतानी
च्छ्रीभाष्यकार श्श्रुतिरक्षणाय
रामानुजव्याहृत सूक्ति भावं
रामनुजात्संवि वृणोतिकोऽन्यः ६०.

(३) रामानुजौ यामुन तीर्थसेवा
परौपरौ योगिजनेश्वरौ तौ

---

(१) अंगैः = शीक्षादि षडगैः-अंगेन = शरीरेण पुष्टा = पोषिता.

(२) रामानुजः = भाष्यकारः. श्रीकृष्णश्च

(३) रामानुजौ = श्रीकृष्ण लक्ष्मणार्यौ. यामुनतीर्थं सेवापरौ श्रीकृष्णः यमुनानदी संबन्धि जलपान तत्परः लक्ष्मणार्यः = यामुनाचार्य सेवन तत्परः. परौ = उत्कृष्टौ.

गीतामहाशास्त्र तदीयभाष्य
प्रवर्त कौलोकहिता वभूताम् ६१

कृत्वास वेदार्थं सुसं ग्रहंतं
वेदान्तदी पेन विलोक्यसारम्
संगृह्य नित्याचरणं निरूप्य
गद्यत्रयेणा प्यकरो त्प्रपत्तिम् ६२

१) रामानुजार्येण महार्थपूर्णाः
नव प्रबंधा निधयो नवेव
प्रदर्शिता दर्शनतत्पराणां
श्रीवष्णावानां सुखजीवनार्थम् ६३

शून्यी कृतंब्रह्मपुराहि बौद्धै
श्चिन्मात्रितं शंकरदे शिकेन
स्वरूपरूपामल सद्गुणाढ्यं
श्रियःपतिं तद्व्यत नोद्यतीशः ६४

कूरेशगो विन्द मुखाप्त शिष्यै
श्श्रीरङ्गनाथं भुविसेव मानः

---

(१) महार्थपूर्णाः = विशेषाभिधे यार्थपूर्णाः, महाद्रव्यपूर्णाः

यतीश्वरो वैष्णव संपदंता
मासेतु शीताचल माततान ६५

श्रीशैल पूर्णार्यसुतोयतीन्द्र
श्रीपादसक्त: कुरुकेशनामा
शारीरकं भाष्य मधीत्य तस्थौ
रामानुजाज्ञा परिवर्धनाय ६६.

श्रीरङ्गराज: श्रितकल्पभूज:
रामनुजार्याय रमानियुक्त:
पितेव पुत्राय निजाधिपत्यं
ददौविभूतिद्वय नायकत्वम् ६७.

रामनुजार्येऽखिल लोकरक्षा
दीक्षापरेदिव्य विमान मध्ये
श्रिया भुवारङ्गपति स्त्वनल्पे
शेतेसुखंशेषफणीन्द्र तल्पे ६८

श्रीरङ्गराज स्यजयध्वजोयं
रामनु जार्यस्सहशिष्य बृन्दै:
यियासुरासी द्विजयायशीघ्र
मासेतुशी ताचल मध्यभागे ६९

आसन् चतुस्सप्तति विद्वदग्र्याः
सिंहासनस्था यतिराजशिष्याः
कूरेशगोविन्दमुखा स्त्वनेके
पाषण्ड वेतण्ड घटामृगेन्द्राः ७०

श्रीयादवः कूरकुलाधिपेन
पराजितो राजित तत्व दृष्टिः
यतीन्द्र संबन्ध मवाप पश्चा
त्सच्छिष्य बन्धो गुरु मुक्तिहेतुः ७१

संस्कृत्य तं श्रीयतिराज चन्द्रो
गोविन्द दासभिदयाजुहाव
तदाज्ञायासोऽपि चकार हृष्टो
ग्रंथंयते धर्म समुच्चयाख्यम् ७२

श्रीयज्ञमूर्त्याख्य बुधस्सशिष्य
श्शास्त्रा र्थवादे सकला न्विजित्य
रामनुजार्यं विजिगीषुराया
दद्वैत सिद्धान्त निबद्धदीक्षः ७३

(१) शास्त्रेषुधि र्ज्ञाननिशात खड्ग
श्श्रुत्यन्त चाप स्स्फुरदुक्ति बाणः
तस्था वनन्ता सुरराड्जिगीषू
रामनुजो वादरणां गणाग्रे ७४

तयो रभून्द्वारत संयतीव
कालस्तथाष्टा दशावासराणाम्
वादे कृतासंवदि संप्रतिज्ञा
पराजितस्या न्यमतप्रवेशः ७५

सामान्य शात्रेषु समानयुक्ति
प्रयुक्तिधारासु सभासदास्ते
नाशक्नुव न्नूहितु मेकपक्षे
जयश्रिश्रय स्सुस्थिर भाव बन्धम् ७६

वेदान्त वाक्या र्थविचारवाद
स्तदा प्रवृत्त श्श्रुति सूत्रजालैः

---

(१) अनन्तासुरराड्जिगीपु:=अनन्तायां = भुवि. सुराः = ब्राह्मणाः. तेषाम्. राज:=श्रेष्ठस्य=प्रथानस्य. यज्ञमूर्ते.. जिगीषु:=जेतुमिच्छुः. अन्यत्र. अनन्ता:=अनेके। असुरराज:=राक्षस श्रेष्ठाः तेषांजिगीषुः। रामानुज:=यतिराज:. लक्ष्मणश्च.

यतीश्वरो दर्शति सर्व भेदो
जगर्ज कंठीरवकंठनादः ७७

प्रख्यात कीर्ति स्सचयज्ञमूर्ति
र्मिथ्येति यद्यद्वदति स्मसर्वम्
सत्यं तदित्या श्रितशास्त्रसारः
समर्थयामास यतिप्रवीरः ७८

ब्रह्मैव सत्यं खलु तत्वमेकं
मृषान्य दित्याह तदैकदण्डी
तत्वत्रयं साधु निरूप्यवेदै
स्सत्यं वितेने सकलंत्रिदण्डी ७९

परंपुमांसंगुणहीनमादौ
श्रुत्वासुदूरंश्रुतयो व्रजन्ति
गुणाधिकंतं चयतीश वादे
निशम्य सर्वा स्सरसा भजन्ति ८०

(१) यदा परब्रह्मस यज्ञमूर्ति
विशेषदारिद्र्य युतंवितेने

(१) विशेषदारि द्र्ययुतम्=विशेषाणम्. गुणादीनाम्. दारिद्र्येन= शून्येन. युतम्=युक्तम्. निर्विशेषचिन्मात्र मित्यर्थः. अधिक दारिद्र्युत मिति प्रतीयते.

तदाऽसहिष्णुः प्रबलैःप्रमाणै
श्श्रिया सनाथं व्यतनो द्यतीशः ८१

एवंस्थिते सप्त दशोऽह्निरात्रौ
प्रज्ञावत स्तस्य चज्ञमूर्तेः यज्ञ
कुयुक्तिवादे यतिशेखरस्य
नैवास्फुरत्खण्डन शौण्ड युक्तिः ८२

गत्वायतीशो वरदं प्रणम्य
सुप्तस्तदा स्वप्न गतो रमेशः
श्रीयामुनाचार्य कृत प्रबन्धे
प्रादर्शय त्खण्डन युक्तिवादम् ८३

प्रातस्समुत्थाय कृताह्निकस्सन्
सभांप्रतस्थे यति सार्वभौमः
ज्ञात्वास विद्वान्मुखवर्च्च सातं
प्रणम्यबद्धांजलि राबभाषे ८४

यतीन्द्र! किंवच्मि भवत्प्रभावं
भावंगतस्ते खलुदेवराजः
जितोऽस्मि दासोऽस्म्यनु कंपयेमं
मायांबुराशेर्जनमुद्धरेति ८५

कृपानिधिः श्रीयति शेखरस्तम्
संस्कृत्य चक्रे श्रितवर्गसंस्थम्
नर्येविदो मूकमपि त्यजन्ति
तेपण्डितं किंश्रितमु त्सृजन्ति ८६

तस्मिन्पवित्रे धुतयज्ञसूत्रे
गतैकदण्डे विलसत्त्रिदण्डे
तस्याभवद्वै दिकवेषणवेष्टया
तिर्यक्कृतंपुण्ड्र मथोर्ध्वपुण्ड्रम् ८७

नाम्ना यतीशःखलुयज्ञमूर्तिं
श्रीदेवराजं मुनिमाततान
सज्ञानसारं गुरुराण्णिदेशात्
प्रमेयसारंच चकार भूयः ८८

ततो यतीशो विदुषां सहस्रै
रेकान्तिनां द्वादशभिस्तथान्यैः
बुधै श्चतु स्सप्तति पीठमुख्यै
रियायविद्वद्विजयाय हृष्टः ८९

सचोळदेशे विदुषो विजित्य
श्रीकुंभकोणेश मुखान्प्रणम्य

पाण्ड्ये शाठारातिमुपास्य पश्चा
त्कुरङ्गनाम्नीं नगरीमवाप ९०

तत्रत्य नंब्याख्य रमासहायं
प्रणम्य भक्तया यतिराज चन्द्रः
तस्थौ तदा सोऽपि हरिर्बभाषे
शुचिस्मितो विस्मय मावहन्तम् ९१

मयागृहीता बहवोऽवताराः
नतेषु मे कोऽपि पदानुवर्ती
सर्वे भवन्तं परितश्रिश्रयन्ते
कोवश्यमन्त्रो भवदन्तिकेस्ति ९२

तंमन्त्र मद्योपदिशेतिपृष्टो
यतिप्रवीरो हरिमाह हृष्टः
देवोपि नैनं लभते विशिष्ट
श्शिष्योनचे त्तस्य गुरो रभीष्टः ९३

इति प्रशान्तं हरयेवदन्तं
पतियतीना मनुवर्त्य दान्तं
लब्ध्वा चिरत्नं सचमन्त्ररत्नं
मेमेरबल स्स्वस्य मनुं महान्तम् ९४

स्वतंत्रतायाः फलमित्यवेत्य
स्वशिष्यतां श्रीनिलयस्य तस्य
रामनुजो वैंष्णवपूर्णनाम्ना
प्रसिद्धमेनं हरिमाततान ९५

हरेःप्रभा वादपि तस्यनाम्नो
महाप्रभावो विदितोहि कृष्णौः
दूरस्थितौऽप्यापदि याज्ञ सेन्याः
नामैव वस्त्राणि ददौसभायाम् ९६

विजित्य सर्वान्विदुषोद्विषोऽथ
क्रमात्स्वसिद्धान्त निबद्धदीक्षः
विशारद श्शारद नीरजाक्ष
रस शार दापीठ मवाप भूयः ९७

तमागतंतत्र विचित्रवेषा
योषास्वरूपा स्वयमाहभाषा
कथ्यासमित्यादिक वाक्यभावं
सुसंगतं ब्रूहियती श्वरेति ९८

गंभीर नीरोद्भव मृष्टनाळ
स्थितार्करश्मि स्फुटिता ब्जनेत्रः

तदर्थइत्याकलना त्प्रहृष्टा
श्रीभाष्यकारा भिधयाजुहाव ९९

श्री भाष्यकारश्श्रितदासवर्गैः
क्षेत्रंप्रपेदे पुरुषोतमाख्यम्
जगत्पतिं तत्र ननामयुक्तं
सुभद्रया भद्रदया दयार्द्रम् १००

तदाग मोक्तेन पथोत्सवादीन्
जगत्पतेः कारयितुंप्रवृत्तः
अनिच्छया तस्य चतत्रसुप्तः
कूर्माच्चलेप्रातरभूत्प्रबुद्धः १०१

स्मरन्जगन्नाथ हरेरनिष्टां
श्रितानुवृत्याऽऽगमपद्धतिताम्
श्रीकूर्मसिंहाचल दिव्यदेशौ
समुद्धरन्वेंकट शैलमाप १०२

श्रीवेंकटेशं शिवरूपमन्ये
विष्णुं विदोन्येव्य वदन्त केचित्
मायाविनंतं हरि मुद्धरिष्य
न्रामानुजस्तानिदमाब भाषे १०३

किमर्थमन्योन्य विवादनोत्का
श्शैवानिचिह्नानि च वैष्णवानि
पुरोनिधायास्य गृहान्विशाम
स्सयानि गुह्णाति तदीयदेवः १०४

तदेवकृत्वा प्रययुर्निशायां
समागताः प्रातरमी प्रबुद्धाः
श्रीवेंकटेशं धृत शंखचक्रं
विलोक्यशैवा विमुखा बभूवुः १०५

तंशंखचक्रांकित बाहुमेवं
कृत्वाऽभवत्तस्यगुरु र्मुरारेः
वक्षस्थले स्वर्णरमां समर्थ्य
श्रीमद्यतीन्द्र श्श्वशुरोबभूव १०६

तद्रक्षणार्थं सयती निवेश्य
प्रबोधयन्तद्वि भवं जनानाम्
अद्यापितत्पार्श्वतले चकास्ति
विज्ञान मुद्राविलस त्कराब्जः १०७

शेषाचल स्यांतिक दिव्यदेशे
गोविन्दराजाभि धदेवमूर्तिम्

संस्थाप्य तद्गोपुर मंटपादी
न्सकारयामास यतिप्रवीरः १०८

श्रीशैलपूर्णार्य मुखान्निशम्य
रामायणाष्टादश गूढभावान्
ननन्दवाल्मीकि मुनेर्वचांसि
नासंप्रदायज्ञ सुबोधकानि १०९

(१) श्रीरङ्ग कांचीपुर वेंकटाद्रि
मुखाननेकान्किल दिव्यदेशान्
संस्कृत्य संस्कृत्य महोत्सवान्ता
न्विधायरेमे यतिसार्वभौमः ११०

असूयया शैवमताभिमाना
च्चोळाधिपो वैष्णव बाधकोऽभूत्
सद्द्वादशाद्बान्यति शेखरोऽगा
च्छ्रीयादवाद्रिश्रियमुद्धरिष्यन् १११

नारायणं तत्रपुन र्निधाय
तथैवडिल्ली विजयं विधाय

---

(१) महोत्सवैः = नित्योत्सवाद्यैरने कैरुत्सवैः. अन्तान् = शोभमानान्.

संपत्कुमारं प्रणिधाय तस्मि
न्रामानुजोरंङ्गमवाप पश्चात् ११२

श्रीरङ्गराजस्य महाप्रसादा
त्कूरेश पत्न्यां जनितौ सुतौसः
रव्यौ पराशर्व्यास शुभाभि धानौ
श्रीयामुनार्याभिमतेश्चकार ११३

श्रीरङ्गनाथ प्रियपुत्रकौतौ
गोविन्दराजार्यं पदानुषंगौ
अकारयच्छ्री यतिराजचन्द्र
स्सत्संप्रदायानु गतिं विधातुम् ११४

गोविंदराजानुज पुत्रकस्य
परांकुशाख्यां प्रणिधायपूर्वम्
श्रीयामुनार्यस्य मनोऽस्थितं
प्रपूरयामास महान्यतीन्द्रः ११५

किंवर्ण्यते भाष्यकृतो महत्वं
यदंजलिस्स्याच्छ्रि तरक्षणाय
भवाहिसंदष्ट जनावनेय
द्रामानुजार्येत्य मृताक्षराणि ११६

वर्षाश्शतं विंशतिरेवमासी
द्रामानुजार्यो यतिराज राजः
धृतत्रिदण्डश्चिदचिद्विशिष्टं
विशिष्ट मद्वैत मिति प्रदर्श्य ११७

भिन्नैर्दण्डै र्मिळित मभवत्सूत्रबद्धं त्रिदण्डं
तद्वद्भिन्नैश्चिदचिदधिपैस्संगतं त्वेकरूपम्
तत्वंसत्यं श्रुति निगदिताद्वैतमेतद्विशिष्टं
नाद्वैतं केवल मितिवदन्सत्रि दण्डो यतीन्द्रः ११८

श्रीरङ्गराडतनुत स्वयमेवतस्य
सत्संप्रदाययुत वैष्णवदर्शनस्य
रामानुजार्यं मुनिदर्शनमित्यभिख्यां
रामानुजार्यं कृत बुद्धि सुबोधनाय ११९

श्रीरामानुज दर्शने परतमो नारायण श्श्रीपति
र्निर्दोषोऽखिल सद्गुणश्चिदचितो रात्माच सत्यंजगत्
बद्धाः कर्मवशाद्धरेश्च कृपया भक्त्याप्रपत्याचितः
तत्सायुज्य मवाप्य सेवनपरानन्दन्ति नित्येपदे १२०

विशिष्टाद्वैत सिद्धान्त । स्थापकाय महात्मने

श्री भूत पुरवासाय । यतिराजायमंगळम्

इति श्रीमत्सदाचार्य कृपालब्ध सारस्वतस्य

कृष्णमाचार्य शतावधानिनःकृतिषु

गुरुवंशमहाकाव्ये

तृतीयस्सर्ग स्समाप्तः

—:•:—

श्रीमते रामानुजायनमः

# गुरुवंश महाकाव्ये

## चतुर्थ स्सर्गः

श्रीरङ्धामनि पराशर भट्टनाथः
कूरेशदेशिकसुतः कुलरत्नदीपः
संवर्धितःकरुणया किल रङ्राजा
रेजे सबाल हरिदश्वइव प्रकाशात् १

श्रीभाष्यकारमुखपंकज बालसूर्यो
गोविन्दराज पदपद्मविलोल भृङ्गः
कूरेशहस्त परिलालित सिंहपोतः
प्रज्ञानिधिस्समभव त्खलुभट्टनार्थ २

श्रीरङ्गराज पुरतश्शठ कोपगाथां
बाल्येयमौसदसि कूरपते स्तनूजौ
श्राव्येण कंठनिनदेन रघूद्वहाग्रे
रामायणं कुशालवाविवगायतस्स ३

तद्गान निर्भर सुधाप्लुत सर्वंगात्रो
निद्रामवाप्य फणिराजतले शयानः
श्रीरङ्गराट् प्रतिपदं नयनेविवृत्य
प्रेम्णा प्रपश्यति पराशर भट्टनाथम् ४

(१ श्रीरङ्ग नायक सुतीकृत भट्टनाथ
स्तद्भुक्त शिष्टमधुरान्नविवर्धितोसौ
बालो बभूव विबुधैरभिनन्द्यमान
श्श्रीमत्परि ग्रहणमेव महत्व हेतुः ५

सत्वेकदा पितृसमीपमुपेत्य बाल
श्श्रृण्वन्शठारि मुनिसूक्ति मथाऽऽबभाषे
एकस्थितिःकथंमणुत्व महत्वयोस्स्या
स्तेजोंऽर्धकार चययोरिव तद्वदेति ६

तद्युक्तिवाद मभिनन्द्य पिताप्रहृष्टः
पुत्रंजगाद ननुवत्स! तदस्तिवेदे
मेधाविनोप्यनुपनीत जनस्यलोके
नैव श्रुतिःश्रुतिपथं सममेतिसेति ७

---

(१) श्रीमतः = लक्ष्मीपतेः, धनिकस्य, परिग्रहणम् = अंगीका रःस्वीयत्वेना भिमानः,धनिकोयंस्त्रीयत्वे नाभिमनुते लोकेतस्य गौरवंभवतिः—

सर्वज्ञभट्ट भिरुदः किल कोपिविद्वान्
श्रीरङ्गमाप जय काहळिकानिनादैः
खेलन्तदाशिशुगणैःपथि भट्टनाथ
स्तं स्वांजलिस्थसिकता कियती त्यपुच्छत् ८

तस्मिंस्तदाप्रतिसमा लपनेप्यशक्ते
मन्दस्मित स्समवद त्प्रियरंगपुत्रः
जानासिनां जलिमिता सिकतेतियत्त्वं
सर्वज्ञनामधरणेनकथं त्रपेति ९

तद्बालनिर्भय सयुक्तिवचो निशम्य
लज्जान्वित श्च विमुखःप्रययौ सविद्वान्
श्रीमद्यतीन्द्रमुख देशिकपुंगवास्ते
दृष्टा श्शुभा शिषमदुः प्रथिता अमुष्मै १०

कूराधिपस्स्वतनयं विधिनोपनीय
प्रारब्धसाङ्ग निगमंव्यतनो त्तदानीम्
श्रुत्वेकवार मवद त्सचभट्टनाथ
स्स्वाभ्यस्त पूर्वमिववेद मदभ्रमेधाः ११

गोविन्दराज चरणांबुजसन्निधाने
शास्त्राण्यधीत्य सकलान्यपिभट्टना थ

वेदान्तयुग्म विशदीकरणेसमर्थः
प्रज्ञानिधिर्विमतवादि भयंकरोऽभूत् १२

तस्यानुरूपदयितां परितोविचिन्वन्
श्रीरङ्गराजमवद त्किलकूरनाथः
स्वामिन्! त्वदीय तनयःपरिणेतुमर्हो
जात·किमत्र करणीयमिति प्रपन्नः १३

कूरेशवाचमव धार्यसरङ्गराजो
वाचामरंद मधुसार मूचेदमुचे
त्वंनिर्भरोभव मदीयसुतस्यकार्ये
सर्वंमयैव समये क्रियतेमुदेति १४

श्रीरङ्गभावमधिगम्य सकूरनाथ
स्तूष्णींस्थितस्तदनु पूर्णगुरोःकुलीनः
श्रीमान्बृहच्चरण नामकसूरिवर्यः
कन्यामदादनुगुणां सुजनैकमान्याम् १५

श्रीरङ्गराज कृपयाकिल भट्टनाथो
गार्हस्थ्य मेत्य यतिराजवचो नियुक्तः
सत्संप्रदाय मभिवर्धयतेस्म तत्र
श्रीरङ्गधामनि सुधामनि मोदमानः १६

(२) तत्रैकदा परमवैदिक मूर्तिरेक
श्श्रीवैष्णव स्सकल दिव्यलानि पश्यन्
श्रीरङ्गराजचरणौ शिरसाप्रणम्य
श्रीभट्टनाथशरणे न्यवसत्तदानीम् १७

संपूज्यतं समवदत्सच भट्टनाथः
स्वामिन्? त्वादीक्षिततेलेषुविदां त्रिरिष्टाः
केवा वसन्ति वदत च्छ्रवणा भिलाषा
मांप्रेरयत्यविरता भवतोऽधिगन्तुम् १८

इत्युक्तवन्त मवदत्सच भट्टनाथं
वेदान्तिनामविदितो बहुभिःकिमन्यैः
श्रीरङ्गपट्ट णनिवासपर स्सविद्वा
न्वाणी श्रियोरनुगुणाश्रय एकएव १९

जित्वा सषण्मतगता न्विदुषस्त्वजय्यो
जेगीयमान विभवो विबुधैरनेकैः
स्वाद्वैत दर्शनसमर्थन बद्धदीक्ष
स्सर्वज्ञव त्परिजनै रभिचाकशीति २०

---

(१) शरणेगुहे.

श्रीभट्टनाथ पुरतोद्भुतमेवमुक्त्वा
श्रीरङ्गपट्टणमुपेत्य सवैष्णवेन्द्रः
श्रीवत्स चिह्नसुतवैभव मप्रमेयं
वेदान्तिनेऽपिकथयन्यदुशैलमाप २१

विद्वद्वरेण्य विजयायविनिश्चितार्थं
स्संप्राप्यरङ्गनिलयस्य तथाभ्यनुज्ञाम्
आन्धोळिकामधिगतः परिवारयुक्त
स्संप्रस्थ तस्सचपराशर भट्टनाथः २२

श्वेतातपत्र सितचामर शोभमानो
मानातिगं विभवमाकलयन्मुरारेः
रत्नांगुळीयमकुटांगद भूषितांग
श्श्रीरङ्गराजइव रङ्सुतः प्रतस्थे २३

श्रीरंगपट्टण समीप वने रहस्यं
वेदान्तिन स्सकल मप्यधिगम्यसर्वम्
संस्थाप्यतत्रचतुरः किल भट्टनाथ
स्सत्राशिवद्गृहमगा द्विदुषः प्रसिद्धम् २४

श्श्रितो ध्र्वपुंड्रनिचय श्शित यज्ञसूत्रः
कौशेयवस्त्रयुगळी कमनीयवेषः

श्रीवामनो बलिमिव त्रिपदा मनन्तां
वेदान्तिनं परमयाचत वादभिक्षाम् २५

तंशारदाभ्र परिवीत कळा धराभं
दृष्ट्वाप्रहृष्टहृदयो निगमान्ति नामा
स्वस्थान सन्निहित षण्मत पीठमध्ये
वेदान्त पीठमधिरूढमिदं बभाषे २६

त्वंभट्टनाथइव मेप्रतिभासिपूर्वं
विप्राच्छ्रुतश्रुतवतां महतां वरिष्टः
नान्योऽस्तिमेपुरत एव निवासयोग्यः
किंशास्त्रवादनिपुणो भवती हलोके २७

इत्थंवदन्निगम शास्त्र पुराणसूत्रै
रद्वैतमेवसुदृढं प्रतिपाद यन्सः
वादोपवाद परिवर्धित युक्तिधारा
सारैरपूरयदमुं निगमान्त सिंधुम् २८

मन्थानशैल परिमन्थित सिंधुवत्त
द्वेदान्तिवाद कलुषीकृत भट्टनाथः
पुंखानुपुंख शरकल्प वचश्श्रिया त
त्सिद्धान्तदुर्गं परिभेदन मातताान २९

(१) कुर्वन्श्रुतिं भगवतीं सरसा ममिथ्याँ
सूत्रांचितां गुणगणार्णव वल्लभांताम्
श्रीभट्टनाथ गुरुराडकरोद्विशिष्टा
द्वैतंमतं सकलसम्मत मार्यगीतम् ३०

(२) तत्वार्थनिर्णय वशादवशस्सविद्वा
न्विज्ञान नुन्न विलसद्विशयान्धकारः
वेदान्त्यदभ्रविनया त्सहसोत्थितस्स
न्भट्टार्य पादयुगळे न्यपतत्प्रपन्नः ३१

मायान्धकार कुहराद्विनिर्वतितोंहं
दासोहमस्मि नहिसोऽह मिति ब्रुवाणः
बद्धांजलिः प्रणयगद्गदया चवाचा
तस्थौ निवृत्त विषयान्तर संगदोषः ३२

आर्तंतमार्तं परिरक्षण बद्धदीक्षो
वेदान्तिनं करुणया चरणारुणाब्जे

---

(१) सरसाम् = भेदाभेद सगुणनिर्गुणत्वबोधक वाक्या नांसामरस्ये नान्वयात् बाधारहितम्, श्रृङ्गाररसयुक्ताम् अमिथ्याम् = सत्याभूताम्, सूत्रांचिताम् = ब्रह्मसूत्रैरनु बद्धाम् मंगळसूत्रालंकुताम्. गुणगणार्णववल्ल-भाम् = कल्याणगुणाकर परमपुरुषप्र तिपादिकाम्.

(२) विशयः = संशयः, सएवान्धकारः.

व्यामुग्धबन्धु समतामुपनीय पश्चा
देवंजगाद सपराशर भट्टनाथः ३३

श्रीरङ्गनायक कृपा त्वयि संप्रवृत्ता
तस्मात्वमद्य परिवर्तित वृत्तिरत्र
प्राचीनदोष परिदूषित शेमुषीका
नैवार्थतत्व मवगन्तुमिहोत्सहन्ते ३४

इत्थं प्रभाष्य धुरि सादर मर्थयन्तं
तंपंचसंस्करण संस्कृत मात्मवन्तम्
वेदान्तिनं तदनु माधवदास नाम्ना
ख्यातं ततोऽतनुतकूर कुलावतंसः ३५

सम्मानितो मणिमया भरणैरनेकै
स्तत्राप्यरंगविभु सेवन जातहर्षः
श्रीयादवाद्रिनिलयं प्रणिपत्यभूयः
श्रीरङ्गमाप विभवैस्सच भट्टनाथः ३६

वेदन्त्यपि प्रियगुरोर्विरहासहिष्णु
स्सन्यस्य कूरपतिपुत्र समीपमागात्
अस्मद्यति स्त्वमिति गाढमथालिलिंग
श्रीभट्टनाथ गुरुरात्प्रिय शिष्यमेनम् ३७

अस्मद्यतिर्गुरुपदांबुज चंचरीक
स्सत्संप्रदायम भजन्निगमान्त युग्मम्
पश्चात्तदीय वचना च्छठजित्सहस्र
व्याख्यां नवां नव सहस्रमितां वितेने ३८

(१) पूर्वंयतीन्द्र वचनात्कुरुकाधिपोऽप
व्यख्यां चकार शठवैरि सहस्रकस्य
षड्भिश्चतैर्दशमितै विवृताधुनासा
प्यस्मद्यतेः करुणया नवतामवाप ३९

(२) भट्टार्यदेशिकगुरु र्गुणरत्नकोशं
श्रीशब्दपूर्वमथनाम सहस्र भाष्यम्
श्रीरङ्गराजनुति मद्भुत विष्णुपूजां
श्लोकाष्टकं मनुरहस्य परंचकार ४०

श्रीभट्टनाथ विभवं किमुवर्णयाम
श्श्रीमद्यतीन्द्र चरणौ शरणं प्रदर्श्य

---

(१) नंजिय्यर कृता ओन्ब दायिरण्णडि नामिका, नवताम् = नव सहस्रा संख्यात्वम् नूतनत्वम्. कुरुकाधिपः = कुरुकेशः = श्रीशैलपूर्णतनयः रामनुजार्येणपुत्रत्वेन स्वीकृतः आरा यरप्पडि नमिकांशठकोप सहस्र-व्याख्यां कृतवान्

(१) मनुरहस्यम् = अष्टाक्षरीमन्त्ररहस्यम्.

अस्मद्यतिं निगमसार निधिं निधाय
स्वल्पेवयस्यपि जगाम परं पदंयः ४१

अस्मद्यति स्तदनु दर्शन दर्शकोऽभूत्
श्रीरङ्गधामनि निजार्य कृपावलंबः
शिष्यस्सएव तनुना मनसाच्चवाचा
यस्सेवते निजगुरो रमला मनुज्ञाम् ४२

अस्मद्यते रधिगत स्त्वथ शिष्यभावं
नंबूरिपूर्ववरदो निचुळा पुरस्थः
तस्यैकदा वकुळ भूषण सूक्तिभाष्यं
विस्फष्टलेखनकृते गुरुणा प्रदत्तम् ४३

गुर्वाज्ञया सवरदस्स्वपुरंयियासुः
पूर्णांकवेरतनया मतरद्भुजाभ्याम्
तत्पुस्तकं विधिवशान्यपतज्जलौघे
कृत्यानि साहसव तांविपदां पदानि ४४

(१) तीर्त्वाकथंचिदपितां गुरुकोशनाशा
न्निष्किंचनो जनइव प्रविलप्य पश्चात्

---

(१) गुरुकोशनाशात् = गुरोः = आचर्यस्य.महतश्च कोशस्य = ग्रंथस्य. द्रव्यभांडागारस्य. नाशात् = विनाशत्.

पूर्वंश्रुतं गुरुमुखात्सविशेषभावं
वाल्मीकिवत्कर इवामलकं ददर्श ४५

सर्वंविलिख्य शठजिन्निज सूक्ति भाष्यं
नंबूरिवंशतिलको वरदो व्यदात्तत्
स्वाचार्यं हस्तकमले गुरुरप्यवेक्ष्य
स्वोक्ताद्विशेषमधुरं सचविस्मितोऽभूत् ४६

(२) ज्ञात्वाप्रवृत्त मखिलं वरदस्यमोदा
दस्मद्यतिः करुणया स्वसुतार्थं युक्तम्
नंबिळ्ळ नामकरणं कृतवान्महन्त
श्शिष्यं स्वतोऽप्यधिक सद्गुण मर्थयन्ते ४७

वेदान्तयुग्म निखिलार्थं रहस्यबोधं
दत्वागुरुः परम कारुणिकस्तमेव
रामानुजार्यमत वर्धक मार्यमुख्यं
नाम्ना प्रसिद्धमकरोत्कलिवैरिदासम् ४८

---

(२) स्वसुतार्थयुक्तम् = अस्मत्पु त्रकइत्यर्थ बोधकम् द्रविडभा षायांनंबिळ्ळै इत्याकारकं नामकरणं कृतवान्.

(१) अस्मद्यतीन्द्र गुरुसागरतोऽमृतंत
त्स्वीकृत्यविष्णुपदगो भवतापशान्त्यै
वेदार्थसार मभितस्सववर्षरंगे
कारुण्यपूर्ण हृदयः कलि वैरिमेघः ४९

नंबिळ्ळदेशिक सुधामय सूक्तिजालै
राकृष्यमाण हृदया बहवः प्रपन्नाः
श्रीरंग धामनि पुनर्यतिराजगोष्टी
माटीकतेस्म विपुलाच तदीयगोष्टी ५०

तत्रैकदा विभवमस्य वृथाऽसहिष्णु
स्तोडप्परार्यविबुधः कुरुकेशवंश्यः
सन्ताड्य पुंड्रनिचयं परिमृज्य याज्ञ्यं
सूत्रंसमच्छिनदहो ? कुलजाभिमानः ५१

इत्थं प्रभूत परिभूततरोऽपि शान्तः
प्रारब्धकर्मफल मित्यभिमान शून्यः
तस्य प्रसादनकृते समचिन्तयत्सः
सन्तो द्विषन्त मपिजातु नहिद्विषन्ति ५२

---

(१) अमृतं भक्तामृतत्वेन प्रसिद्धं शाठकोपगाथासारम् जलञ्च विष्णुपदगः = नारायणपदा श्रितः अकाशगः

तोऽप्परार्य दयिता वरदार्य शिष्या
श्रुत्वा स्वभर्तृकृतदेशिक भंगदोषम्
प्रत्यागतं पतिमुवाच कृतापचारं
त्वांनोत्सहे समवलोकितु मेवगेहे ५३

यद्यप्यहंतु सहधर्म चरीतवास्मि
धर्मार्थकामविषये नहि चात्मनाशे
देहंभवेद्भुवदधीन मथान्तरात्मा
स्वचार्यपादक मलार्पित दिव्यभृङ्गः ५४

दत्तंमदङ्ग मनघं भवते पितृभ्यां
तच्छिन्दिभिन्दि किमपीह कुरुष्वशक्तः
नैवात्मनि प्रभुरसह्य मह्यपचार
श्रीनाथ एव खलु सर्वजनात्मनाथः ५५

देहव्ययाद्भुवि विनस्यति देहमन्ध
स्स्वात्मानुबन्ध विलये नहिकोऽपि शक्तः
तस्माच्छरीरमपहाय च बन्धुरुद्धं
ध्यात्वात्माना हरिमगात्खलु चिन्तयन्ती ५६

भात्राश्रिया द्रुवति तत्पति देवतानां
स्वर्गेचिरं सुखमिति पथितं हि शास्त्रे

आचार्यदेवकृपया हरिसंश्रितानां
मुक्तिर्भवेन्नखलु संसरणानुषक्तिः ५७

अत्यन्तदुःख परयाप्रियये वमुक्त
स्तोऽल्पराख्य विबुधोऽनुशयात्सलज्जः
कान्तामुवाच दयिते ? किमहंतुर्या
मात्सर्यत श्श्रुतमिदं मुषितं तदानीम् ५८

रात्रौततस्स वरदानुनयाय गन्तुं
भार्याप्रदर्शितपथ स्त्वररं विवृत्य
द्वारे तदैकवसनं वरदंविलोक्य
प्रोवाच नक्तमिह किंस्थितवानसीति

मूर्ध्नाप्रणम्य वरदस्त्विदमाह विद्वन् !
सत्यंशपे भवदनुग्रह कामुकोऽहम्
देवोऽपिमां नमहते महदार्ति हेतुं
पुंड्रोपवीत धरणे ममदे ह्यनुज्ञाम् ६०

इत्थंवदन्त मनघं परिसांत्व्य भक्त्या
संपूज्य तच्चरणोः प्रणतस्स भार्यः
त्वंसर्वलोकगुरु रित्यभणत्सविद्वान्
क्षान्तिर्हिसर्व जयिनी महतां विशुद्धा ६१

नंबिळ्ळयार्यं गुरुपाद समाश्रितेषु
मुख्याभवन्ति बहवः परमार्थ विज्ञाः
तत्रापिदेशिक पदांबुज युग्म तुल्यौ
कृष्णाह्वयः प्रियतमः खलु कृष्णपादः ६२

कृष्णद्वयेन शठकोप सहस्रभाष्यं
सद्वादश द्वय सहस्र मितंत्वकारि
स्वाचार्यरुच्यनु गृहीत महार्थ बोधो
यस्माद्भवे दखिल वैष्णव धर्मभाजाम् ६३

(१) श्रीकृष्ण पादगुरुराड् वरदार्यसूक्ति
शृण्वन्यथा श्रुतमसौ व्यलिखन्निशायाम्
षट्त्रिंशदास्त तदिदंहि सहस्रकाणां
भाष्यंगुरोरभिमतं शठजिच्छ्रुतीनाम् ६४

(२) पश्चाच्छ सुन्दर वराभिध संयमींद्रै
र्गुर्वाज्ञाया कृतमभूच्छठवैरिसूक्तेः
भाष्यंहि षड्द्वय मितंनिखिलानिपंच
प्रख्यात देशिक कृतानि हितानि नृणाम् ६५

---

(१) ईडुमुप्पत्तायिरनामकं वडक्कुत्तिरु वीधिपिळ्ळै कृता मित्यर्थः.

(२) सुन्दरवराभिधः=अळहियमनवाळ जिय्यर नंबिळ्ळैशिष्यः·

श्रीकृष्ण पादलिखितं शठकोपगाथा
भाष्यं प्रवर्तयतुमेव सदेशिकेन्द्रः
ईयुण्णिमाधवकरे न्यदधात्सपश्चा
च्छ्रीपद्मनाभ विदुषे प्रददौसुताय ६६

श्रीपद्मनाभगुरुराट्स्वपदाश्रिताय
रामानुजाभिध बुधाय सचापितस्मै
श्रीशैलनाथविदुषे ततएवचास्म
त्सौम्योपयन्तृमुनिराड् तदवाप भाष्यम् ६७

कलिकालदोष कलुषी कृतात्मनां
कलिवैरिदास करुणैव केवलम्
नळिनाक्षपाद नळिनाप्तयेभवे
दलमन्यहेतु कलनंहि निष्फलम् ६८

इति श्रीमत्सदाचार्य कृपालब्ध सारस्वतस्य
कृष्णमाचार्य शतावधानिनःकृतिषु
गुरुवंशमहाकाव्ये
चतुर्थस्सर्ग स्समाप्तः

—:o:—

श्रीमते रामानुजायनमः

# गुरुवंश महाकाव्ये

## पञ्चम स्सर्गः

श्रीकृष्णपादस्य सुतौस्थितौद्वा
वाचार्य कारुण्य फलायमानौ
श्रीरामसौमित्रि समानमैत्री
मवापतुस्तौ सुगुणैस्समानौ १

(१) ज्यायान्स्तयोर्लोकगुरुः कनीयान्
श्रीरम्यजामातृ बुधाभिधोऽभूत्
द्वावद्वितीयावपि सद्वितीयौ
कृतौवटुत्वादिक संस्कृतौतौ २

वेदान्तविज्ञान सुनिश्चतार्थौ
शास्त्रेषु सर्वेष्वपितौ समर्थौ

(१) द्वौ=लोकार्यरम्यजामातृबुधौ· अद्वितीयावपि=सदृश रहितावपि-सद्वितीयौ भार्यासहितौ गृहस्थावित्यर्थः·

समाश्रित स्वार्थं पदांबुजातौ
जातौहि तत्कृष्ण पदार्यजातौ ३

(२) लोकार्य वर्योऽपिहरे रनुज्ञा
विशेषतोऽशेष रहस्य सारम्
तद्भूषणं श्रीवचन प्रपूर्वं
चकार तद्भूषण माश्रितानाम् ४

जगद्गुरुर्दर्शन वर्धकोऽभू
च्छ्रीकृष्ण पादादनुरङ्गपुर्याम्
श्रीशैलनाथार्यमुखा स्त्वनेके
दासास्तदीया विदिता बभूवुः ५

(१) तद्वैभवं सोढु मपारयन्त
श्श्रीवैष्णवाः केचन वाचमूचुः
श्रीरङ्गनाथस्य पुरःपुरस्था
स्स्वामिन्नयं धर्मभिदित्यतद्ज्ञाः ६

---

(२) लोकाचर्यः श्रीवचन भूषणाख्यं रहस्यग्रंथं प्रकटीकृतवान्.

(१) पुरः=अग्रे. पुरस्थाः श्रीरङ्गनगरेस्थिताः. अतत्ज्ञाः तदाशय मजानन्तः.

रंगाज्ञयालोक गुरोश्चसूनु
श्श्रीरम्य जामातृ गुरुस्समेत्य
वेदान्तसारं विशदं प्रकुर्व
न्नाचार्यपूर्वंहृदयं व्यतानीत् ७

रामानुजार्यः कृपयारहस्यं
मंत्रंतदर्थं प्रकटीचकार
पश्चादयं लोकगुरुस्तदर्थं
प्रचारतोलोक गुरुर्बभूव ८

सत्संप्रदायानुगतं रहस्यं
सदस्यमासीत्कृपयाऽस्यलोके
लोकार्यवर्यः कृतवान्प्रबन्धा
नष्टादश द्राविड भाषयाग्र्यान् ९

अस्मद्गुरूणा मिहवंशवृक्षो
प्यालक्ष्मणार्याद भवत्प्रकाण्डः
पश्चत्तुशाखाद्वयमाविरासी
द्वेदान्तयुग्म प्रसवाभिवृध्यै १०

(१) पौरोगव श्रीयतिशेखरस्य
हरस्समासी त्प्रणतार्तिपूर्वः
आत्रेयवंश्यस्सघटांबुवाह
कुलाग्रणीस्तस्य सुतोऽपि विद्वान् ११

रामानुजस्तस्यच पद्मनाभ
स्सुतोऽभवत्तस्य च रामसूनुः
रामानुजार्यस्य पदाश्रितोऽभू
च्छ्रीवेंकटेशो निगमान्तवर्यः १२

श्रीभाष्यकारा दधिगम्य भाष्यं
शारीरकं श्रीकुरु काधिनाथः
श्रीविष्णुचित्ताय ददौ सतस्मा
द्वात्स्यान्वय श्श्रीवरदो ग्रहीत्तम् १३

तस्माच्च शारीरक भाष्यमेत
च्छ्रीपद्मनाभार्यसुतो महीयान्
रामानुजार्यः परमाप तस्मा
द्वेदान्तवर्योऽलभतार्यवर्यः १४

---

(१) प्रणतार्तिहराचार्यः

लीला विभूते विलयं विशंक्य
स्वयं तदा बाधकमातनोति २३

सेवोत्सुकानां विधिर्दुविपाका
न्महोत्सवा भ्युन्नत रङ्ग धाम्नि
क्षेत्रेऽपतन्दुर्यवना स्तदानीं
समृद्धसस्ये शलभाइवोग्राः २४

स्वयं समालोच्य रिरक्षुरासी
त्प्रमाणजातं निगमान्तवर्यः
प्रमेयरक्षा विधिमातनोच्छ्री
लोकार्यवर्यो यवनप्रकोपे २५

वेदान्त लोकार्य गुरुप्रभावं
प्रपश्यतां तद्गतभाववन्धम्
नदृश्यते क्वापित थाविभेदः
पाश्चात्यवर्गेष्व धुनायथास्ति २६

(१) उदीच्यवाचीकलयेरिदानीं
सर्वस्यपुंड्रस्य विनाशकाले

---

(१) बालवादः = पुच्छवादः. वबयोरभेदात्. बालवादः = अर्भकवादव न्निरर्थकइत्यर्थः.

पादौस्तिनास्तित्वविवादएव
गजेऽपिनष्टे खलुवालवादः २७

आच्छाद्यतद्रङ्ग विमानमार्गं
बर्हिनिधायेतर मूर्तिमेकाम्
श्रियाभुवा रंगपति गृहीत्वा
ययौतदालो कगुरुर्वनान्तम् २८

निनायसर्वं निगमान्तवर्यं
श्श्री भाष्य को शादिक मन्यतोऽपि
श्री वैष्णवानां विलयस्तुरङ्गे
तदुत्सवो नित्यपदे तदासीत् २९

लोकार्यवर्योऽपि सरङ्गनाथो
ज्योतीष्मतीं नामपुरीं प्रपेदे
श्रीरङ्गभाङ्गं सहसाऽसहिष्णु
र्विवेशपश्चात्परमंपदंतत् ३०

श्रीरङ्गराट् लोकगुरोर्वियोगा
त्सुदुःखितो भक्तजनैः प्रणीतः
दृष्ट्वातदा केरळदिव्यदेशा
न्क्रमादयं यादवशैलमाप ३१

श्रीयदवाद्रौ समतीत्यकालं
ततोऽगमद्वेंकट शैलराजम्
श्रीरङ्गराजश्चिरमास तत्र
सुसत्कृतो वेंकटनायकेन ३२

नृसिंहदेवो यवनान्तरङ्गः
कंसस्यचा क्रूर इवावतस्थे
रङ्गेनियुक्तो यवनाद्ररक्ष
श्रीवैष्णवान्तत्रहताव शिष्टान् ३३

श्रीगोवणोनाम विभुस्तदानीं
पुरेच नारायणनाम्न्यवात्सीत्
सरङ्गराजानुमतेर्जिगाय
नृसिंहयुक्तो यवनेशसैन्यम् ३४

आर्यास्तदा रङ्गमणिंचदासीं
प्रोचुर्निहन्तुं यवनेश्वरंतम्
सदापितद्रङ्ग महोत्सवेषु
तस्या स्मृते गौरवनिष्क्रयोण ३५

प्रचोदितार्यैः किलदेवदासी
छलाद्वशीकृत्य चगोपुरात्तम्

निपात्य पश्चत्पतिता तदानीं
मुक्तिगता रङ्गकृते मृतासा ३६

श्रीरङ्गराजः पुरमापरङ्गं
वनात्पुरंदाशरथि र्यथास्वम्
वेदान्त वर्यो निगमान्तयुग्मं
स्वसूनवेऽदा द्वरदार्यनाम्ने ३७

पित्रासमश्श्रीवरदार्यवर्यो
वेदान्तयुग्मं विशदीचकार
श्रीरङ्गपुर्यां श्रितवैष्णवेषु
श्रीरङ्गलक्ष्मी स्स्थिरतामवाप ३८

पांड्येष्वभू च्छ्रीमधुरासमीपे
कुन्तीपुरी धी प्रशयान संज्ञः
श्रीवैष्णवस्तत्र च गोमठाख्ये
वंशेसल्लोकार्य पदाब्जभृङ्गः ३९

श्रीरङ्गनायक्यभिधा तदीया
भार्यातयोर्भाग्यविशेषयोगात्
शेषांशभूतोऽभव दात्मजातो म
यथाहि विद्यानययो र्विवेकः ४०

बालस्स बालेन्दु रिवाकळङ्को
व्यरोचतस्वप्रभया प्रहृष्टः
पिताकरो त्सौम्यवराभिधंतं
तमोभिदं मुग्धविलोकनेन ४१

(१) पित्राकुमारो विधिनोपनीत
ष्षडङ्ग वेदाध्ययन प्रवीणः
कलाभिरेवं सकलाभिरासी
त्पूर्णोयथा पार्विक शर्वरीशः

गृहस्थधर्मेण ततः स्थितस्य
सौम्योपयन्तुस्सरस स्सुतोऽभूत्
रामानुजाख्यो रमणीयमूर्ति
र्दीपात्समुत्पन्न इवप्रदीपः ४३

लोकार्यशिष्यप्रवर स्तादानीं
श्रीशैलनाथः कुरुकानगर्याम्
अवर्तत श्रीशठकोमसूरि
श्रीसूक्तिसर्वार्थरहस्यवेत्ता ४४

---

(१) कलाभि = विद्याभिः. षोढशात्मक कलाभि.

तस्यांतिके सौम्यवरोमहात्मा
श्रीकृष्णपादोक्त शठारिसूक्तीः
भाष्येणसाकं समधीत्यसर्वं
रहस्यविद्दर्शन वर्धकोऽभूत् ४५

तस्मिंस्तदा श्रीनगरे यतीन्द्रं
संस्थाप्य तद्दिव्यनुतिव्यतानीत्
सौम्योपयन्ता यतिराजविश
त्याख्यां यतीन्द्र प्रवणाभिधेयः ४६

सदिव्यदेशान्परितो विलोक्य
श्रीभूतपुर्यां यतिराजचन्द्रम्
प्रणम्य तस्यानुमतेस्तदानीं
विद्याविपंचीं प्रविवेश कांचीम् ४७

तत्रत्यकृष्णार्यगुरो स्समीपे
घटांबु वाहान्वय संभवस्य
शारीरकं भाष्यमधीत्य विद्वा
न्वेदान्तयुग्मं विशदीचकार ४८

श्रीशैलनाथार्य वरस्यपश्चा
त्तद्वैभवं वीक्ष्य वदन्तिसन्तः

श्रीमद्यतीन्द्रप्रवणं यतीन्द्रं
भूयोऽपिभूमौ कृपयाऽवतीर्णम् ४९

अशिश्रयन्सौम्य वरं मुनीन्द्रं
सर्वेरहस्यार्थविदोपिसन्तः
श्रीमच्छठाराति सहस्रगाधा
भक्तामृतस्यंदिन मंबुवाहम् ५०

श्रीयादवाद्रिं समवाप्यतत्र
श्रीदेवराजार्यगुरोस्समीपे
आचार्यहृन्नामक सद्रहस्यं
जग्राह लोकार्यं सहोदरोक्तम् ५१

समुद्धरिष्यन्किल भक्तिशास्त्रं
रामानुजोऽभूद्रमणीयमूर्तिः
प्रपत्तिशास्त्रोद्धरणायभूय
स्सौम्योपयन्ताऽभवदादिशेषः ५२

(१) प्रतप्त कार्तस्वर दिव्यगात्रः
प्रफुल्ल रक्तांबुज पत्रनेत्रः

---

(१) रङ्गः, = रङ्गनायकः. नामैकदेशेनामग्रहणम्. स्त्य भामायाः स्त्येतिवत्. भीमसेनस्य भीमइतिवत्.

सौम्योपयन्ता मुनिराबभासे
रङ्गोयथा संयमि रूपधारी ५३

श्रीकृष्णपादार्यं कृतंचभाष्यं
विवृण्वति श्रीमतिरङ्गधाम्नि
श्रीरम्य जामातृ वरेतदानीं
श्रीरङ्गनाथश्श्रवणोत्सुकोऽभूत् ५४

सौम्योपयन्त्राऽभि नयेन भावे
प्रकाश्यमानेऽभिनवेशठारेः
शेषाहितल्पेन सहैवमोद
प्रवाहभङ्गैर्विचचाल रङ्गः ५५

शठारिगाधाऽश्रुतपूर्वभावो
यथायथा श्रोत्रगतस्तदानीम्
श्रीरङ्गराजो निगमान्त सिद्धां
सर्वज्ञतां संकुचितां समेने ५६

निरूपिते संयमिना परत्वे
विस्मृत्य चार्चातनु मादिरूपम्
पदेपदेस्वं परवासुदेव
ममंस्त नित्यैः परिगीयमानम् ५७

क्वचिच्च सौशील्यगुणेऽभिनीते
सौम्योपयन्त्रा परतां विहाय
श्रीरङ्गनाथोऽर्च्य तनोकरेण
प्रादर्शयत्स्वोदर दाम बन्धम् ५८

विश्लेषमोहार्द्र वशा मवस्थां
श्रुत्वा शठाराति गतां जहर्ष
स्मरन्पुरास्मिन्भुवि जायमाने
स्ववीक्षणस्याद्भुत वैभवंतत् ५९

अप्राप्य वाचो मनसा सहैव
यतोनिवृत्ता स्तमपि ब्रुवन्त्य:
शठारिगाथा स्स्ववशं प्रचक्रु
स्तद्व्याख्यया सौम्यवरस्य देवम् ६०

तथाप्रभृत्येव सरङ्गराजो
वेदानुगम्योऽपिशठारिसूक्ती:
तदीयभावेन हृतोऽनु धावे
द्वशीकृतो मुग्ध दृशेव कान्ता: ६१

इत्थंयतीन्द्र प्रवणस्यपद्या
चछ्रीकृष्णपादार्य कृतंचभाष्यम्

निशम्यमायार्भक रूपधारी
श्रीरङ्ग राडाविर भूज्जने भ्य: ६२

(१) श्रीशैलपूर्वं स्तुतिपद्यमेकं
श्रीरम्यजामातृ कृतेविधाय
स्वशिष्यभावं प्रकटय्यप श्चा
दन्तर्हित स्सर्वजनै स्सदृष्टः ६३

तदद्भुतसौम्य वरोविलोक्य
सत्संप्रदाये गुरुशिष्य भावम्
प्रबोधयत्स्वाचरणेनदेव:
कृपाविशेषादिति विस्मितोऽभूत् ६४

सौम्योपन्ता सहि तस्सशिष्यै
श्शठारि गाधामृतनित्यतृप्त:
श्रीरङ्गराजं परितर्प्यंतत्र
महायतिख्याति मवाप तस्मात् ६५

शिष्येषुमुख्या न्परितोविधाय
दिशागजानष्ट महायतीन्द्र:

---

१) श्रीशैलेशदयापात्रं । धीभक्त्यादि गणार्णवम् यतीन्द्रप्रवणंवन्दे रम्य जामातरं मुनिम्·

आसेतु शीताचल मार्यजुष्टं
वेदान्त युग्मं विशदीचकार ६६

लोकार्थतत्सूनु रहस्यसूक्ती
व्याख्यायच द्राविडभाषयैव
श्रीकृष्ण पादीय शठारि गाथा
भाष्यप्रमाणार्थ मथाऽलिखत्सः ६७

शठारिगाथा दशकैकपद्य
मंदादिनाम्नाशतकं तथार्तेः
प्रबन्धमेका मुपदेशरत्न
मालांवितेनेश्रितकंठमालाम् ६८

सौम्योपयन्तुः कृपयातदीया
स्समस्त शास्त्रार्थ महारथास्तेः
दिशागजा दर्शन पीठसंस्थाः
परंपराचार्य पदेनिविष्ठाः ६९

रामानुजार्योगुरुशब्दवाच्य
स्तदंध्रियुग्मंशरणं जनानाम्
सर्वेऽस्मदीया गुरवोऽपितस्य
संबन्धमात्रा ज्जनमुद्धरन्ति ७०

श्रीवानाचलयोगिराडथमहा श्रीभट्टनाथोमुनिः
श्रीवासार्य यति धंटांबुकुलजो रामानुजश्चात्मजः
वाधूलान्वयजो वरप्रदमहा नारायणख्यो गुरुः
पीठस्थाः प्रतिवादिभीकरगुरुश्श्रीदेवराजस्त्वमी ७२

तुलामूलावतीर्णाय
तोषिताखिलसूरये
यतीन्द्रप्रवणायास्तु
नित्य श्री नित्यमंगळम् ७२

शाके षड्गजनाग चन्द्र सहिते श्रीक्रोधि संवत्सरे
मासेफाल्गुण संज्ञकेऽह्नि चगुरोश्शु क्लेऽष्टमी सत्तिथौ
श्रीमान्कृष्ण शतावधानिरचितं जीयाच्चिरंभूतले
नव्यं श्री गुरुवंश नामकमहा काव्यंयतीशा दरात् ७३

इति श्रीमत्सदाचार्य कृपालब्ध सारस्वतस्य
कृष्णमाचार्य शतावधानिनःकृतिषु
गुरुवंशमहाकाव्ये
पंचमस्सर्ग स्समाप्तः

—:०:—

श्रीमते रामानुजायनमः

# गुरुवंश महाकाव्ये

## षष्ट स्सर्गः

श्री श्री श्री परमहंस परिव्राजक त्रिदण्डि श्रीमन्नारायण

रामानुज जिय्यर्स्वामि चरित्रात्मकः

श्रीमत्त्रिदंण्डिनारा
यणरामानुज संयमीन्द्र वृत्तम्
वृत्तं पुरतः प्रीत्या
काव्यंरचया म्यद्य सुसहुवृत्तम् १

पूर्वंश्रीगुरुवंशकाव्य मलिखं श्रीसौम्यजामातृस
च्चारित्रान्तमशेषलोक विदितं तत्पंच सर्गात्मकम्
श्रीनारायण रामसोदरयतेर्दिव्य प्रभावात्मकं
षष्टंसर्गमथोल्लिखामि महता प्रेम्णाचसंप्रेरितः २

---

(१) सुबहुवृत्तम् = सुंदर बहुळछन्दोवृत्त सहितम्.

श्रीनारायण रामसोदरमुनेरंशावतारात्मतां
ज्ञात्वातद्विभवान्तदोयचरितंप्रत्यक्षतस्सर्वतो
दृष्ट्वाकिंचिदिदंवदामि गुरुवंशाख्येच काव्येंधुना
सर्वंवक्तुमशक्यमेव महतां वृत्तन्तुलोकातिगम् ३

पूर्वाचार्यपरंपरा सुचरितं पूर्वार्यसूक्तिक्रमात्
काव्येऽस्मिन्विषयीकृतं नहिमयादृष्टं विशिष्टंत्विदम्
प्रत्यक्षीकृतमक्षराक्षरमतस्तथ्यं चपथ्यंहिनः
नैवात्रातिशयोक्तिरस्ति चरितेस्या न्यूनसूक्तिःपरम् ४

श्रीसौम्यजामतृ मुनीन्द्र शिष्याः
पश्चात्‌वधीतामल सूत्रभाष्याः
मतप्रचारंसुजनै रदूष्याः
मुदावयतन्वन्परितोगतेर्ष्याः ५

वानाद्रिरामानुज सूरिमुख्या
यतिप्रवीरास्त्ववतरे गृहस्थाः
विद्वद्वरावादि भयंकराद्या
यतीशसिद्धान्त निबद्धदीक्षाः ६

विशिष्टाद्वैतसिद्धान्त बद्धकौतूहलाःपरम्
रुरुधुर्दुर्मतव्याप्तिं । प्रतिवादि भयंकराः ७

वरवर मुनिशिष्यास्स्वीय वंशक्रमेण
स्वगुरुपदनिविष्ठाःकुर्वतेस्म प्रचारम्
निगमशिखरयुग्म ज्ञाननिष्टा वरिष्टाः
कतिपयदिवसेषुस्वार्थमुत्सृज्य पूर्वम् ८

तदन्येऽपिमठाधीशा । वि शिष्टा द्वैतपारगाः
विद्वांसस्तत्र तत्रस्था । बितेनु र्मतपद्धतिम् ९

(१) काले गतेकले दोषा । दभवन् भारतावनौ
परमार्थदृशाहीनाः परमार्थेहया जनाः १०

(१) आचार्यवंश्याः क्रमशोऽनभिज्ञा
स्स्वाचार मात्मीय मतप्रचारम्
परित्यजन्तः परित श्चरन्त
स्स्वीकुर्वतेस्मार्थ धिया परार्थम् ११

कमठाइवते मठाधिपा
स्स्वमठा कुञ्चितवृत्तयोऽभवन्

---

(१) परमार्थेहया = उत्कृष्टार्थ प्रयत्नें नेति विरोधप रिहारः.

(१) अर्थेहया = स्वप्रयोजनबुध्याद्रव्य बुध्यावा.

कलिदोषमषीमलीमसे
सुजनेनास्तिकता स्थिताऽभवत् १२

प्रभुता समतानुसंगता
जनतायां गुरुशिष्यवृत्तिता
क्वगतानु सदार्यसम्मता
मतसबन्धविशेषनिश्चिता १३

योगिनश्शास्त्र विज्ञान । योगिनश्च दिवंगताः
तद्वंश्याराजकीयाग्र्यो । द्योगिनोभोगिनोऽभवन् १४

लक्ष्मीपति स्स्वमतलोपमवेक्ष्यशेषं
स्वात्मावशेष मिदमाहतमादिशेषम्
बद्धान्समुद्धर पुनर्भुविजायमानो
मानोचितश्चिदचिदीश्वरतत्वविस्त्वम् १५

पुरैकदा बाह्यकुदृष्टिवादैः
शून्यीकृते मामक भूतियुग्मे
रामानुजार्याभिधयाऽवतीर्णो
मार्ष्चिक्रिथावाप्तविभूति युग्मम् १६

पुनरपिकलिदोषाद्दूषिते वेदमार्गे
वरवरमुनिरूप स्संप्रदाय प्रवृत्तः

सुविशद मतनोस्त्रय्यन्त युग्म प्रचारात्
श्रुतिविदितविशिष्टा द्वैतसिद्धन्त वृद्धिम् १७

भूयोधुना त्व मवतीर्य कलिंविजित्य
श्रीरामनाम विभवान्मदनुग्रहेण
आसेतु सीतनगमार्यं जनैरुपेतो
व्याप्ति कुरुष्व निगमान्त युगस्यलोके १८

इतिरमापतिनागदितोऽहिराट्
सकलया कळया जनितुंक्षितौ
व्यतनुता तमनिनिश्चय मादरा
द्धुरविलोलफणावळि मंडलः १९

(१) तदनुदनुजवैरि श्श्रीधरो भूधरेस्मिन्
निहित सकलभारो भूरमा संगतोसौ
निगममयविचारो निर्विचारोबभूव
प्रियसुत धृतराज्यः पूज्यमानःपितेव २०

श्रीवेंकटेशाश्रितशीर्षदेशे
श्रीभारतांबा हृदयाविशेषे

---

(१) निगममयेन=वेदमयेन. विना = पक्षिणा. गरुडेन चरतीतिनि गम-मयविचारः, भूधरे= शेषे.

आन्ध्रप्रदेशे विदुषांनिवासे
श्रीकाकिनाडाख्यपुरी चकास्ति ॥ २१

तत्रत्य वंगीपुरमंगयार्यात्
चूडांबिकायां सुकृतातिरेकात्
बभूवपुत्र प्रभया विचित्रो
दिनोदया त्पूर्वदिशीव मित्रः ॥ २२

(१) चन्द्रत्रिनाग विधुशाकशरत्समांके
सौम्याब्दकेनभसि चोत्तरभाद्रऋक्षे
जातोह्यनन्त कळयाऽमलया सुतोऽयं
तिर्वेंगळार्य शुभनामयुतोबभूव ॥ २३

चिलकमर्रिकुलोत्पन्न कृष्णमा चार्यभार्यया
लक्ष्मीनसांबयापश्चा च्छ्वीकृतःप्रकृतोयथा ॥ २४
अवाप्यदत्त पुत्रत्व । मनघोऽयंकुमारकः
श्रीमन्नारायणाचार्य नाम्ना विलसितोऽभवत् ॥ २५

अकलुष मतिरेष भाषमाणो
मुदमतनो त्स्वजनस्य बालभावे

---

(१) चन्द १ त्रि ३ नाग ८ विधु १ अंकानां वामतोगतिः १८३१ शालिवाहनशके.

शुगवटनिपत ज्जनोद्धिधीर्षु
श्शुकवट नामकवंशपावनोऽभूत् २६

(१) नारायणार्यो मधुरां प्रविष्टो
बाल्ये त्ववाची मपठत्तदानी
माद्वादशाब्दागम मांग्लभाषां
तांद्राविडीं वाच मथादरेण २७

ततस्स मेधानिधिरात्तमूरु
ग्रामेतु काव्या न्यपठत्तदानीम्
विशिष्यगीर्वाण विदांवरिष्टो
बभूव हृष्टश्च गुरूपदिष्टः २८

मंडपेटमहाग्रामे । न्यायप्रकरणादिकम्
पठित्वा शास्त्रमर्यादाः ज्ञातवान्प्रीतमानसः २९

श्रीमन्ना रायणार्योऽय । मपठत्तर्कसंग्रहम्
तुनि श्रीरंगविदुषां । सन्निधौ सन्निधौतदा ३०

तदासीत्संगमो ते. कं. । गोपालचार्यसूरिणा.
श्रीमन्नारायणार्यस्य । भाव्यभ्युदयसूचकः ३१

---

(१) अवाचीं—दक्षिणाम्.

गोपालनारायण वर्यंयोश्च
स्नेहःप्रगढोऽभवदात्मयोगात्
योगेन लोकोद्धरणाग्रपश्चा
न्नारायणस्येव नरस्यपूर्वम् ३२

नारायणाचार्यवरोऽथहृष्ट
स्स्वाध्यायिभी राजमहेन्द्रपुर्याम्
गोपालवर्येणच्च तर्कशास्त्रं
पपाठ शास्त्रज्ञगुरो स्समीपे ३३

नवमाब्देच विवाहो । जातो नारायणार्यस्य पूर्वम्
सत्कुलजा या जाया । सानाम्ना ह्यलरु मेलुमंगासीत् ३४

शिष्टाचार समन्विता सुवदना भर्तुं प्रियासासती
तुष्ट्यापुत्रयुगं क्रमेण तनयामेकां प्रसूताततः
दिष्ट्यामोद विरुद्धया गुणनिधे र्नारायणा र्यस्यतः
स्याष्टाविंशतिहायनेवयसि तंत्यक्त्वा विमुक्तिगता ३५

(१) तदाद्वितीयोऽभवदद्वितीयो
भवेविरक्तोसुगुणेषुरक्तः

---

(१) अद्वितीयः = भार्यारहितः. अद्वितीयः = अनुपमः

सक्तो प्रजाना मभिवृद्धिकार्ये
नारायणार्यो नगतुल्य धैर्यः ३६

सराजकीयो ध्यममध्यवर्ती
चकार देशीयपट प्रचारम्
सुचारुमूर्ति स्सुगुणानुवर्ती
ज्य स्वराजसंपादक चक्रवर्ती ३७

हरिजनोद्धरणे करुणेरित
स्तदनुरूपगृहादिक निर्मितौ
प्रयततेस्म फलावधि सादरो
दरविशेष मशेष जनेषुच ३८

लोकेमानवसेवा । माधवसेवेति मनसिमन्वानः
नारायणाचार्यवरो । नरहित सेवासक्त मानसोऽभूत् ३९

गोपालसूरि वरसंगमभाग्य योगात्
नारायणार्य विबुधः परमार्थदृष्टः
वेदान्तयुग्मविदिता खिलतत्वबोधो
(१) रामनुजार्यकृपया रमतेस्म तृप्तः ४०

---

(१) मंदसारामनुजार्याः—श्रीभाष्याचार्याः रामानुजः = बलरामानुजः गोपालाचार्याः भगवद्विषयाचार्याः

संत्यज्यसामान्य जनानुकूलं
सराजकीयं यतिराजकीयम्
सिद्धान्तमासेतु हिमाचलान्तं
व्याप्तंविधातुं चकमे तदानीम् ४१

गोपालवर्यं सहितेन हितेनतेन
नारायणार्यं विदुषा विदुषांमतेन
संस्था पिताऽऽस्तिकजन स्थितये विशिष्टा
द्वैत प्रचारकसभा चशुभा तदानीम् ४२

आत्तमूरु पुरे श्रीमद्वेणुगोपाल सन्निधिम्
दिव्यदेशंव्यतानीत्स प्रबन्धाध्ययनोत्सवैः ४३

विशिष्टाद्वैत सिद्धन्त प्रचार स्तत्रतत्रच
व्यतनोत्पंडितैस्सार्थं । नारायण बुधोत्तमः ४४

(२) हरितनुमपिरामंदूषयन्तो ह्यवाच्या.
श्रुतिपरुषमनिंदन् केचिदार्योत्तमंतम्
तदय मसहमानो मद्रपुर्यां तदैव
प्रविशदमकरो त्सांम्राज्य पट्टाभिषेकम् ४५

---

(२) अवाच्या. = वक्तुमशक्याः. नीचाः-दक्षिणात्याः रामनिंद कद्राविड-पक्षीयाः.

रामायणस्य विभवं रघुरामवृत्तं
तन्नामवै भवमपार मुदारवाचा
नारायणार्यविबुध स्सकलेषु तेषु
नारीजनेषुच नरेषुजुघोष तत्र ४६

श्रीरामवैभव मनेक जनेषु सक्तै
व्यक्तं विलोक्य जनता विनुताग मोक्तम्
तन्निन्दका स्सपदि तत्र विलीयमूका:
धूका यथासम भवन्रविदर्श नेन ४७

प्रीत्या चकार सचरा ज महेन्द्रपुर्यां
कोट्यर्चनं भगवत स्तुलसी दलानाम्
ऋत्विक्छतद्वय निर्वातित यागमेवं
नारायणार्य त्रिबुधोनय विद्वरिष्ट: ४८

कम्यूनिष्टु महाक्रूर । हिंसाकांडा तिशान्तये
क्रान्तये शान्ति भद्राणां । सौमनस्याभि वृद्धये ४९

विद्वद्वरैर्विजयवाडपुरे सविद्वान्
रामानुज क्रतुमियाज दयासमुद्र:
श्रीभाष्य तत्व विदुषांविदुषां यदासीत्
ब्रह्मोत्स्वः कनक पुष्पपदाब्ज पूजः ५०

(१) गोपाला चार्यंवर्योऽपि । सद्गोपालन तत्पर:
विदुषांपूजनं चक्रे । सुवर्णकुसुमैस्तदा
अष्टोत्तरशतं तत्र । श्रीभाष्य पठनं कृत म्
तावद्ग्रंथा स्तथादत्ता । स्तत्र रामानुजक्रतौ ५१

रजाकाराभिधैर्धोरै । र्यवनै पवनैरिव
श्रीभाग्य नगरीश्रान्ता । तदुपद्रव शान्तये
श्रीरामक्रतुमेव भाग्यनगरे नारायणार्योमुदा
चक्रेसक्रममद्भुतं बुधवरैर्निवक्रवृत्तैस्तथा ५२

श्रीरामायणपाठनैर्विपुलत द्व्याख्यानपारंगतै
र्वाल्मीकिश्शठको र रामसहजाचार्यस्तु तत्राभवत् ५३

तत्रासीन्माधवाचार्य श्शास्त्रार्थाढ्य महारथ:
श्रीमाननंगरार्यश्च प्रतिवादि भयंकर: ५४

तदासाम्राज्य पट्टाभिषेक स्सर्वमनो हर:
जातोरामस्यसोमस्य रविवंशमहा बुधे: ५५

इत्थंप्रचारकसभा विविधाश्चकुर्वन्
सर्वैश्चपंडितवरै: क्रतुभिश्च दिव्यै: +

(१) सद्गोपालनतत्पर: = सताम् = श्री भाष्यकाराणम्, गवाम् = श्री सूक्तीनां पालने = रक्षणे, तत्पर: = आसक्त:.

+ नारायणार्यवि बुधो निखिला न्म्रोदशाल्
गत्वा २ श्रमं ब दरिका श्रम मारसाद ५६

भक्तेन भारत जनाव न भक्त दीसः

स्वांशाय सात्विकवराय नरायतस्मै
स्वाष्टाक्षरीमनु मुपादिश दात्मनीतम् ५७

व्यासोऽपि यत्रनिवसन्निगमान्विभाज्य
प्राज्योयमर्थविशदी करणायभूयः
स्त्रीशूद्रवर्गहित पंचमवेदभूतं
तद्भारतं शत सहस्रमितं व्यतानीत् ५८

व्यासेन तेन निगमामलकल्प शाखा
स्रस्तानि तानिनिगमान्त सुमानियत्र
संयोजितानि निजसूत्रगणैः प्रमाणं
स्सेऽयं समंचितदरो बदरी चकास्ति ५९

नारायणार्यो नरसंयुतंतं
नारायणं लोकगुरु पुराणम्
दृष्ट्वाऽतिहृष्टो गतिमाप्नु मिच्छन्
दुष्टानिवार्या न्यवस द्बदर्याम् ६०

कुर्वन्सपर्या हरयेबदर्या
दर्याचकस्यांचिदचं चलात्मा
जजाप भक्त्याकिल मन्त्रराजं
प्रपन्नलोकप्रिय कल्पभूजम् ६१

तपश्चतप्त्वा नियमेनतत्र
स मन्त्र सिद्धि महिमाभिवृद्धिम्
श्रियांसमृद्धि जगतिप्रसिद्धि
तथा प्रपेदे परमार्थ बुद्धिम् ६२

आगत्यपश्चा द्बदरीप्रदेशा
दान्ध्रप्रदेशं निजजन्मदेशम्
सचाश्रमं प्राप्तुमना बभूव
तुरीय मध्यात्म विदां वरीयान् ६३

व्योमाद्रिमेत्य सतु तद्गत संयमीन्द्रैः
पीठाधिपै रनुमतो मतिमान्वरेण्यः
स्वार्थंविहाय परमार्थ दृशैवतत्र
जग्राह शास्त्रविधिना चरमाश्रमंतम् ६४

(१) त्रिदण्डिनारायण रामसोदरा
भिधां समासाद्य विदांवरिष्टः
विशेषकान्तिर्यं तिधर्म निष्ट
स्सशेषभावं प्रकटी चकार ६५

---

(१) शेषभावम् = दासत्वम् शेषावतारत्वम्.

काषायशोभिततनुः कमनीयगात्रो
दण्डत्रयोज्वलकरो धृतपुण्ड्रचित्रः
मन्दस्मितश्शितमनोहर यज्ञसूत्रो
रामानुजार्यइव भाति विशालनेत्रः ६६

संसार भीततरसाधु जनावनेन
दुष्टात्मनांनि रसनेनच धर्मगुप्तेः
सर्वेऽपि सात्विकजना स्तमवेक्ष्य साक्षा
न्नारायणोऽय मवतीर्ण इतीरयन्ति

(२) गोपाल संगसमुदंचित दिव्यकीर्तिः
रामानुषक्तहृदयो रमणीयमूर्तिः
नारायणा भिधयतिनयमार्गवर्ती
रामानुजत्वमनिशं विशदीकरोति ६६

---

(२) यतिपक्षे. गोपाल संगेन = गोपालाचार्यस्नेहेन. रामानुषक्त हृदयः = श्रीरामचन्द्रानुषक्तःहृदय. रामानुजत्वम् = यतिराजत्वम्, तत्पक्षे गोपालसंगेन–गवाम् = श्रुतीनाम्. पालने-रक्षणें अविरोधेनसमन्वये. संगेनप्रेम्णा. रामानुषक्तहृदयः. गोदादेव्यां अनुशक्तहृदयः. रामानुजत्वम् = कृष्णत्वम् तत्पक्षे. गोपालसंगेन = अबीरसंगेन. रामानुषक्तहृदयः. गोपिकानुषक्तहृदयः. रामानुजत्वम् = लक्ष्मणत्वम्. तत्पक्षे गोपालैः = राजभिः. संगेन. रामानुषक्तहृदयः. श्रीरामसंगतहृदयः. अन्यत्सुगमय्.

संप्राप्य पश्चान्नड़िगड्डपालं
श्रीवासुदासाश्रम नित्यवासः
कोदण्डरामस्य तदाश्रमस्य
निर्वाह कोऽभून्नियमाभिवृध्यै ६९

आदिश्यतत्राश्रम वासकार्यां
कोदण्डरामानुगतां सपर्याम्
विधातुमैच्छत्स यतिर्बदर्यां
महान्त मष्टाक्षर मन्त्रयागम् ७०

श्रीमान्न्यायविदांवरो गुणनिधि र्गोपालवर्योबुधः
तत्रासीद्गुदिमेळ्ळ वंशतिलको रामानुजार्यः कविः
ताभ्यांपूज्य तमस्त्रिदंडियति राण्णा रायणार्यस्तदा
भातिस्मात्मविदाबुधेन कविनायुक्तोयथा चन्द्रमाः ७१

बदरिकाश्रम मंडलसत्क्रतौ
द्विशतवैदिक वैष्णवऋत्विजः
समभवन्भु वनाशुभ शान्तये
नगणनातदवे क्षणतस्थुषाम् ७२

(१) नतत्र लोपोऽजनि भक्त राशेः
न तत्रलोपोऽजनि भक्तराशेः
न दक्षिणानां नच दक्षिणानां
लोपोऽय मेको नगतस्यपुंसः ७३

हिमगिरि तट मार्गं गन्तुमेवातिदुर्गं
निरुपम बदरीश स्याश्रमेऽप्यश्रमेण
क्रतुरभवदविघ्नस्तत्र नारायणाख्या
प्रथित यतिवराणां दिव्य संकल्पयोगात् ७४

सोऽयंयतीश्वरवरो नियतोबदर्यां
यात्रार्थमागतवता मकरो ज्जनानाम्
वासार्थमर्थ ममितं विनियोज्य पश्चात्
सत्संगदिव्यसदनं मदनेक शालम् ७५

अष्टाक्षरीयाग विशेषचिह्नं
अष्टाक्षरीक्षेत्रमधो विधाय
तत्रैवदिव्यं सदनंव्यतानीत्
सत्संगपूर्वं जगतामपूर्वम् ७६

---

(१) भक्तस्य= अन्नस्य राशेः=समुदायस्य· भक्तानाम्= भक्तिमतांजनानाम्· राशेः=समुदायस्य· दाक्षिणानाम्=कार्यकरण समर्थानाम्· यज्ञदातव्यद्रव्यणांच·

तत्रापवरका स्सर्वे । गृहोपकरणान्विताः
गतानां नैवलोपोऽस्ति । कस्याप्यल्पस्य वस्तुनः ७७

सत्संगसद्भवनमध्यतलेविशाले
श्री श्रीनिवासमनघंशठवैरिमार्यम्
रामानुजं तदनुजांशुभदांचगोदां
संस्थाप्यपूजन विधिविद धेयतीन्द्रः ७८

श्रीवेंकटेश्वरविभो बंदरीगतस्य
पूजार्थं मर्थमतुलंनिदधे यतीशः
सर्वंच भक्तजन भक्ति समर्पितेन
द्रव्येणसाधयति तन्महिमा ह्यचिन्त्यः ७९

गोपालवर्योऽपियतीश्वरस्य
संकल्पत स्तत्रवसन्करोति
तदातदा द्राविड संहितायाः
श्चतुस्सहस्रा ध्ययनोत्सवादीन् ८०

श्रीमन्ना रायणार्योयतिकुलतिलक स्साधुरान्ध्रप्रदेशे
यादाद्रौ क्षेत्रमुख्ये नरहरिवपुष श्श्रीपतेर्विप्रवर्यै
र्गायत्रीयागमेकं व्यतनुतविभवैर्बालकानांबहूनां
रिक्तनां श्रीमता मप्युपनयनविधिकारयामासतत्र ८१

तदोत्सवो यादगिरावनेके
सेवार्थिनस्संमिळितार्श्चतेषाम्
अन्नप्रदानंयतिराणिण योगात्
कृतं नचासीत्खलु वस्तुलोपः ८२

आनीतान्य धशाखानि । वरंगल्पट्टणात्परम्
महद्भिश्शकटैर्नित्यं । तदीयाराधनेप्सया ८३

भोक्तव्यं कृपयासवैं । वस्तव्यं यावदुत्सवम्
द्रष्टव्यं श्रद्धयेत्येवं । भाषन्तेस्मकृतौतदा ८४

त्रिदण्डिनारायण संयमीश्वरै
र्यदत्रकर्तुं मनसानुचिन्त्यते
सुदुष्करंतत्सुकरं भविष्यति
भवंत्यहो सिद्धधियोहिसाधवः ८५

श्रीमन्नारायण मुनिवरोभारतेस्मिन्पवित्रे
श्रीमद्रामायणपठन संयुक्तरामक्रतूनाम्
कर्तुंचाष्टोत्तोरशत मथाऽऽलोचयतत्प्रसिद्ध्यै
स्तूपान्दीपानिवरचयितुं रामकोटिस्वरूपान् ८६

क्रतुसंततिं सिद्धये निबद्धा
ननुनारायण योगिभिः प्रसिद्धा

नववत्सर साधनीयदीक्षा
नववत्सारतमा सदऽविपक्षा ८७

श्रीरामक्रतु संततौसमभव च्छ्रीरामएवस्वयं
कर्ता, कारयिता त्रिदण्डियतिराड्रामानुजार्यःकविः
वाल्मीकि र्बुधराड्वसिष्ट मुनिवद्गोपालसूरिस्तथा
कल्याणं जगतांफलंतु धनदा भक्ताःकिमन्यद्भवेत् ८८

(१) शालासी त्क्रतुराजि भारतमिदं सर्वंहिमा द्यान्तिका
दासेतोः पुनरासमुद्रनिलया त्प्राच्या त्प्रतीच्या च्छुभात्
आरंभस्तु पुन.पुन र्वसुमयस्तंभ प्रतिष्टावधिः
दीक्षैष्यंनववत्सरा क्रतुरयंलोकातिगोराजते ८९

संचारक्रतुरेषबाष्पशाकट श्श्रीरामदूताभिधो
रात्रावेवतलान्तरंत्वगमयत्प्रातः प्रभृत्यदरात्
आसायंहवनादिकर्मविधिना संपाद्यतेस्मक्रमात्
ग्रामेवानगरेगिरौ वनतलेदीर्घे प्रयाणेऽपिवा ९०

सूर्योदियात्प्रभृति चादिन मध्यमग्नौ
सायंच राममनुना हवनंविधेयम्

---

(१) क्रतुराजि = क्रतुमुख्ये. पुनःपुनः वसुमयः = वारंवारंद्रव्ययुतः-पुनर्वसुनक्षत्रयुतः.

संक्षेपसर्गगतपद्यशतेनचैवं
रामयणेऽर्थयुत विंशतिसर्गपाठः ११

गीतादिपाठस्सकलैश्चभक्तै
स्संकीर्तनं विष्णुसहस्रनाम्नाम्
श्रीमद्यतीन्द्रस्यच पंडितानां
यथावकाशं श्रुतिधर्मबोधः १२

श्रीरामनाम्नां नियमेनपत्रे
विलेखनंस्यान्महिळाजनानाम्
प्रत्येककार्यक्रमएषलक्ष्या
स्संपूजनं यत्सकलोपचारैः १३

अयंक्रतोर्नित्य विधिःप्रशस्तः
कदापि नैवाभवदस्यलोपः
सुदीर्घकालेनव वर्षमध्ये
श्रीमद्यतीशान निजात्मशक्त्या १४

यत्रस्तं भप्रतिष्ठास्या । तत्र स्थित्वा विधानतः
कतिचिद्दिवसान्येवं । सर्वत स्साधितःक्रतुः १५

श्रीरामकोटि र्हृदये चकास्ति
स्तमस्य भागेषु चतुर्षु चैवम्

संक्षेपरामायण मूर्ध्व भागे
पट्टाभिषेकोरघुराममूर्तेः ९६

स्तंभस्यचाग्रे कलशाविभान्ति
श्रीशंख चक्रादिक विष्णुचिह्नैः
यद्दर्शनादेव जनस्यतानि
धांवन्ति यावन्त्यशु भानिसन्ति ९७

श्रीराममन्त्रस्य महाप्र भावः
केन्द्रीकृतस्तं भमयोऽतिशेते
तत्सेविनां भक्ति मतां जनानां
फलन्ति सर्वाण्यपि वांछितानि ९८

श्रीरामराज्यस्य सुखात्मकस्य
स्थूपाश्च विज्ञानमय प्रदीपाः
श्रीरामनाम क्रतुराजदीक्षा
भद्रात्मिका भारत रामरक्षा ९९

रामक्रतुस्तं भमयानितानि
श्री भारतांबाजयकेतनानि
विज्ञानसंस्कार विनूतनानि
महात्मनांशान्ति निकेतनानि १००

श्रीमन्नारायणयतिवरै स्तूपनिर्माण सिद्‍ध्यै
कुत्राप्यर्थागमनविषये वास्थितोनैवयत्नः
सर्वंसिद्धं सुलभवि धनास्वीयसंकल्प मात्रात्
यत्नस्त्वेको दिशिदिशिबला त्कुर्वतांतन्निवृत्यै १०१

एकैकस्तंभनिर्माण । प्रतिष्टाक्रतुषुक्रमात्
सामान्यत स्सहस्राणां । दशनामभवद्‍व्ययः १०२

तत्रतत्र विशेषेषु । विशेषो भवदादितः
प्रभावोऽयंयतीन्द्रस्य । ज्ञायते नैवकेनचित् १०३

विद्वत्सभासु विदुषांचकवित्वगोष्ट्यां
काव्यश्रियंरचयतां महतांकवीनाम्
वेदानधीत्य पठतांखलु वैदिकानां
दत्तानितत्क्रतुवरेषु परश्शतानि १०४

श्रीमान्त्रिदण्डि यतिशेखरसार्वभौमो
वेदान्त युग्मविदुषांविदुषां प्रियाणाम्
सम्माननं क्रतुवरेष्वधिकं विधाय
बोभूयतेस्म महतेविभवायभूयः १०५

श्रीरामनामनिचयं सकलं विलेख्य
तद्वैभवं प्रतिदिनं मृदु बोधयित्वा

ज्य

श्रीरामराज्यमिह भारत भूमिभागे
जोघुष्यमाणमकरोत्क्रतु भिर्यतीन्द्रः १०६

श्रीमन्नारायणयतिवरो दीनवर्गे दयाळुः
चोरान्बद्धान्कठिन निगळैःकर्मजैरामभक्त्या
मुक्तान्कर्तुं सपदि धुरापट्टणे केन्द्रभूते
कारागारेक्रतुमयमथाऽस्थापयत्स्थूपमेकम् १०७

बरंपुरे राजमहेन्द्रपुर्यां
तथैवकारागृहयो र्यतीशः
स्तंभप्रतिष्ठामकरोत्तदानीं
तत्रत्यबद्धान् कृपयो द्दधीर्षुः १०८

श्रीमन्नारायण यतिवरैर्दी क्षयाऽऽलोच्यतस्यां
वाराणस्यां नवयुवक विद्यार्थिनांराम भक्तयै
प्रज्ञासिध्यैपरम कृपयाविश्व विद्यालयेऽपि
स्तंभो रामक्रतुपरिचितस्सादरं स्थापितोऽभूत् १०९

श्रीमुक्ति नारायण सन्निधाने
यत्रप्रसिद्धाखलु गण्डकीसा
दुर्गेहिमाद्रे रपदूरमार्गे
कृताक्रतुस्तंभ वरप्रतिष्टा ११०

सर्वत्रनूत्नसुधया परिनिर्मितोभूत्
स्तंभकृतोस्सुरुचिर श्चिरवासयोग्यः
मद्रासु पट्टणतले रजितेनसर्व
स्तत्रत्यभक्त धनिकं रचितो विचित्रः ११११

श्रीमत्संयमिनायकेनबदरी मारभ्य संस्थापिताः
श्रीरामेश्वरसेतु वानकुधर श्रीरंगकांच्यादिषु
क्षेत्रेषूत्तरपुण्यती र्थनगरीग्रामेषुरामकृतो
स्स्तंभाराम मयाजयन्ति जगतांक्षेमायतद्दर्शनात् ११२

सर्वत्र भारततले सुजनैर्विशाले
स्तंभानदंभविधिना रघुरामबिंबान्
संस्थाप्यवेंकटगिरौ चरमं विधातुं
स्तभंकृतुंच विदधे समनो यतीन्द्रः ११३

एवंविचिन्तयति संयमिसार्वभौमे
श्रीवेंकटाद्रिशिखरालाय कालमेघः
द्रव्यंववर्ष कृपयासकलान्तरात्मा
श्रीवेंकटेश्वरविभु श्शितपक्षपाती ११४

पूर्वंकृताश्चनववार्षिकदीक्षयाये
सर्वेऽपिवैभवयुता कृतव स्तथाऽपि

श्रीवेंकटाद्रिकृतराम महाक्रतौते
नैवाभजन्दरकळा मपिवैभवेन ११५

अष्टोत्तरं शतमहो क्रतुहोमकुंडाः
तावन्ति भाष्य भगवद्विषयादिकानाम्
पारायणानि, विदुषांतु सहस्रसंख्या
सेवार्थिनांतुनहि तत्क्रतुराजि संख्या ११६

अष्टोत्तरशताख्यात । दिव्यदेशेषु संस्थिताः
विद्वांसःप्रायशस्सर्वे । वेंकटाचलमागताः ११७

साष्टंशतंनिगमशास्त्रविदां वरिष्टाः
श्रीभाष्य तत्व भगवद्विषयर्थनिष्टाः
भातिस्मतैस्सपदि वेंकटनाथशैलो
वैकुंठलोकइव मुक्तगणावकीर्णः ११८

अष्टोत्तरेणच्च शतेन सितातपत्रै
रामाभिषेचन विधिर्हसतिस्मपूर्वम्
एकातपत्ररचितो रघुराममूर्ते
स्साकेत पट्टण तलीयक पट्टबन्धम् ११९

सर्वेऽपिवैष्णवगणा लसितोर्ध्वपुंड्राः
भांतिस्म वेंकटपतेः पदसेवनेषु

अर्चावतार विभवं परिभो क्तुकामाः
प्राप्ताविकुंठनगरादिव नित्यमुक्ताः १२०

शैषाद्रौ कृतरामभद्रविलसत्पट्टाभिषेकोत्सवे
सौमित्रिर्यति शेखरःखलु सुमित्रानन्द संधायकः
तद्भारोद्वहना त्तथाच भरतो गोपालवर्योत्तमः
शतृघ्नोऽभयदार्य सेवनपरोरामानुजार्यः कविः १२१

विद्वांसोमुनयोवसिष्ठमुखरा श्रीरामदूताःपरं
सर्वेभक्तजना विनूत्न विभवो दिव्यो दरीदृश्यते
स्तंभोराम जयध्वजो हरिरसौ श्रीवेंकटाधीश्वरः
कर्ता कारयिता समस्तजगतां क्षेमःफलं शाश्वतम् १२२

सर्वेषामपिभोजनादिवसतिः श्लाघ्या ह्तस्मिन्कृता
वेकंकस्यच षोढशाधिकशतं रूप्याणिमार्गव्ययः
दत्ता तत्क्रतुदक्षिणा सुविदुषां तस्मात्प्रभूता तथा
पूर्वंतत्र नचाभवन्न भवितेत्यालोच्यते द्रष्टृभिः १२३

तत्पूर्वंतत्रतत्र क्रतुषु भुविशतं सप्त संस्थापितायै
स्तूपास्सर्वेऽपि तत्रस्थित शुभद महत्स्तंभपर्यन्त ताःस्युः
तत्तत्स्थाना क्षरांकावृषगिरिगत तत्स्तंभ संदर्शनेन
प्रायस्सर्वेऽपि दृष्टाइव शुभफलदाः प्रेक्षकानां भवन्ति १२४

इत्थं वृषाचलतलेनव वर्षदीक्षा
मुत्सृज्यपुष्करिणिका सलिलेविगाह्य
श्रीमान् त्रिदंडि यति शेखर सार्वभौमो
रेजेशतक्रतुसमो विबुधैकबन्द्यः १२५

श्रीमद्वेंकट नायकस्य करुणा सिन्धोरमेयात्मानः
कल्याणोत्सववैभवं बहुविधान्भोगान्विधायक्रमात्
देवस्थानगताधिकारिभिरसौ संप्राप्यसद्गौरवं
श्रीनारायण संयमीश्वरवरो मान्यश्चधन्योऽभवत् १२६

अवबृधेऽवसिते वृषभाचला
दथयथायथमुच्चलितेजने
यतिपतिःपरिपूर्ण मनो रथो
मतिमगा न्निगमान्त विवर्धिनीम् १२७

वेदान्तभाष्य भगवद्विषियप्रचार
मासेतुशीतनगमार्यं जनेषुकर्तुम्
मेने त्रिदण्डियतिराण्ण चतेनसर्वं
संकल्पितंखलुवृथा भवतीहलोके १२८

श्रीभाष्यं विरचय्य वैदिकविशिष्टाद्वैततत्वंवदन्
वेदान्तंसुरभारतीयमकरोद् व्यापन्नंयतीन्द्रःपुरा

पश्चाद्द्राविडदिव्यवेद शिखरव्याप्तिं विधायमुदा
प्राप्त श्श्रीयतिराज एवहिपुनश्श्रीरम्य जामातृताम् १२९

कालेऽस्मिन् कलिदोषदूषिततरे विद्वत्कुलेप्रायशो
लुप्तंद्राविड संस्कृतात्मक मिदंवेदान्त युग्मंपुनः
प्रोद्धर्तुंजगतीतले ह्यवतर च्छ्रीवैष्णव श्रीनिधिः
श्रीनारायण रामसोदरमुनिर्लोकस्यभाग्योदयात् १३०

श्रीभाष्याचार्यपीठं स्थिरतरमधुनास्थापयित्वासमन्ता
त्प्राप्तानां पण्डितानांगुरुवरमुखतो भाष्यविज्ञानभाजाम्
सम्यक्कृत्वा परीक्षां तदनुगुण वशाद्योग्यतापत्रमेकं
दत्वादास्यन्तिपीठान्नियत बहुमतिंवार्षिकींजीवितान्तम् १३१

षष्ट्युत्तरत्रिशतरूप्यम यींचवृत्तिं
दास्यन्ति भाष्यविदुषांपरिपोषणाय
तज्जी वितान्तमथतस्यच धर्मपत्न्यै
भागंतृतीयमपि तत्रबहूकृतौस्यात् १३२

श्रीरङ्गधाम्नि भगव द्विषयस्यपीठं
संस्थाप्यतत्रचपरीक्ष्य विदांवराणाम्
श्रीभाष्यतत्व विदुषामिव वार्षिकींतां
दास्यन्ति वृत्तिमनिशं निगमान्त वृद्ध्यै १३३

श्रीभाष्यदिव्य भगवद्विषयाभिवृद्ध्यै
पीठद्वयस्यवसु षोढ शलक्षसंख्यम्
संस्थाप्यतेस्थिरतया चतदीयवृद्ध्या
संचाल्यते ह्यधिकृतैस्सकलंचपश्चात् १३४

सभ्या श्चलक्ष्यसंख्याका प्रयच्छन्तिमतादरात्
एकैकसभ्यतासिद्ध्यै । सद्योरूप्याणिषोढश १३५

सर्वंचंतद्वत्सरांत विधाय
सुस्थं स्वस्थं क्रीयते पीठयुग्मम्
सत्संकल्पोसंयमीन्द्रस्यतस्य
स्वल्पोऽनल्पोनोकदा निष्फलस्स्यात् १३६

रामानुजर्यंयमिनां महतीयमाज्ञा
यद्भाष्य रक्षणमथो शठकोपसूक्तेः
व्यख्याविशेष परिपोषण मित्यतस्सा
श्रीवैष्णवैश्चसकलैः परिपालनीया १३७

त्रिदण्डिनारायण संयमीन्द्रैः
कृतेषुकार्येषु महत्तरेषु
महानयं श्रीपतितोषहेतु
र्वेदान्त युग्मोद्धरणात्मकंयत् १३८

नाथादि पूर्वगुरु रक्षितवैष्णवश्री
सौधस्य सुस्थिरतयास्थिति हेतुभूतम्
स्तंभद्वयंखलु महन्निगमान्तयुग्मं
तद्रक्षणं परतमं भुविवैष्णवानाम् १३९

अस्मिन्नब्देतुसौम्ये नभसिसमभवत्षष्टि पूर्त्युत्सवोऽपि
श्रीमन्नारायणाख्या विलसितसुपरि व्राजकाचार्यमौळेः
तस्मिन्कालेबदर्यां सकलनिगम संपूर्ण विद्वद्वरेण्यै
विप्रैरष्टाधि संख्या निचित शतमितै कारितो ब्रह्मयज्ञः १४०

श्रीमन्नारायण यतिपतेष्षष्टिपूर्तिः पुनस्स्यात्
विंशत्यूर्ध्वं शतमिह समावर्धतांसोऽयमार्यः
श्रीमद्रामानुज मुनिरिवस्वार्थमुत्सृज्यलोके
लक्ष्मीभर्तुश्श्रुतिहितमत स्थापनाचार्यवर्यः ४११

श्री रङ्नाथामलवीक्षणेन
म होज्वलो लोकहितं प्रकुर्वं
न्ना रायणाख्यो यतिसार्वभौमो
रा मानुजोऽयं रमतेधरण्याम् १४२

य स्यप्रभावाब्धि तरंगसूक्ष्मा
ण वोऽपिलोकोत्तर कार्यदक्षाः

रा जीवनेत्रोऽयमशेषपुंसां
मा न्यो वदान्यो यतिराजराजः १४३

नु नोदयोराम विशेष भक्त्यां
ज नाननेकान्करुणार्द्रचित्तः
जी यात्परार्थाय कृतावतारो
य तीश्वरस्सोऽय मतीव धन्यः १४४

रु रोध योर्दुमंत युक्तिवादान्
स्वा भीष्टवेदान्त विचारदक्षः
मी मांसयासोऽयमधीश्वरस्य
चि न्मात्रभावं शिथिली चकार १४५

रं गेशकैंकर्यरतस्तदीयो
ज यध्वजोऽयं जगदेकवन्द्य
य तीश्वरो वैष्णव धर्मगोप्ता
तु रीय दिव्याश्रम मृद्विभाति १४६

सर्वत्रदेव निलयेषु नवप्रतिष्ठां
जीर्णेश्रुतेषु चसमुद्धरणंविधाय
श्रीनायका चर्यविभवं प्रकटीकरोति
श्रीमत्रिदंडियतिराज वरोजगत्याम् १४७

श्रीपांचरात्रागम संहिताना
मलभ्यतांवीक्ष्ययती श्वरोऽयम्
मुद्रापयन्ताःपुनरर्च्यमूर्तीः
जीर्णाइवस्थापयति प्रमोदात् १४८

भूतेर्दानतो भाष्यविद्भ्यो महद्भ्य
स्सदा ग्रंथदेवाल योद्धारतश्च
यतीशोऽयमास्ते धरण्यांप्रमातु
प्रमाणप्रमेयाभि रक्षैकदीक्षः १४९

मन्दस्मितोमधुर भाषणभूषण श्री
राजानुबाहुररविन्द विशालनेत्रः
काषायदंड परिमण्डितदिव्यगात्रो
रामानुजोऽयमपरो नहितत्रशंका १५०

नारायण.परतमो नपरस्ततोऽन्यः
शेषास्त्वमी चिदचितः खलुतस्यशेषाः
तत्वत्रयंमिळित मेकमतोविशिष्टा
द्वैतंमतं श्रुतिहितं प्रवदन्तिसन्तः १५१

श्रुतिविदितविशिष्टाद्वैत सिद्धान्त मेवं
दिशिविदिशिजनेषु ख्यापनायावतीर्णः

पुनरपिवसुधायां लक्ष्मणार्यिस्सनोचेत्
नहिभवति तदन्यस्ये दृशोहिप्रभावः १५२

जयतु भुविविशिष्टाद्वैतमाचन्द्रसूर्यं
जयतु यतिवर श्रीभाष्यमन्यैरदूष्यम्
जयतु शठरिपो श्र्श्रीसूक्तिजालं विशालं
जयतुर्यतिकुलेशस्त्वेष नारायणार्यः १५३

श्रीमन्नारायणरा । मानुज जियर् स्वामिने सदास्यात्
मंगळममंगळानां । शमयित्रे निगमान्तयुगळ गोप्त्रे १५४

चन्द्रांकदिक्छशिमिते चशके शुभायाम्
सौम्याब्दकार्तिकसितेतर पक्षषष्टयाम्
श्रीकृष्ण विद्विरचितो गुरुवंशकाव्ये
षष्टश्शिचरंविजयतां जगतीहसर्गः १५५

इति श्रीमत्सदाचार्य कृपालब्ध सारस्वतस्य
कृष्णमाचार्य शतावधानिनःकृतिषु
गुरुवंशमहाकाव्ये
षष्टस्सर्ग स्समाप्तः
—: ॐतत्सत् :—

———

| पत्रम्. | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 1 | 9 | नुभूतें | नुभूयते |
| 1 | 14 | सुमनोशि | सुमनोञ्चितम् |
| 3 | 4 | भवि | भुवि |
| 5 | 5 | कृतादिषृ | कृतादिषु |
| 5 | 7 | त्क्वच | त्क्वचि |
| 5 | 19 | मुनेय | मुनये |
| 5 | 19 | प्रभभृति | प्रभृति |
| 6 | 3 | विस्तुतः | विस्तृतः |
| 7 | 3 | चत्वरिशति | चत्वारिंशति |
| 7 | 8 | भक्तिरुपं | भक्तिरूपं |
| 8 | 2 | निर्निद्रंति | निर्निद्रति |
| 8 | 4 | शुल्क | शुक्ल |
| 8 | 5 | विष्वकसे | विष्वक्त्से |
| 8 | 6 | परभकितं | परभकितं |
| 9 | 8 | निश | निशि |
| 10 | 7 | शटार | शठरि |
| 10 | 10 | दव्यं | दिव्यं |
| 10 | 12 | नटा | नष्टा |
| 11 | 6 | खन | खनि |

| प | पं. | अशु | शु |
|---|---|---|---|
| 12 | 15 | श्शुते | श्श्रुते |
| 14 | 14 | सचित | संचित |
| 20 | 9 | परश्य | परीक्ष्य |
| 22 | 11 | राजचिह्नं | राजचिह्नैः |
| 25 | 3 | व्ययोच | व्यरोच |
| 26 | 2 | नुत | नुतं |
| ,, | ,, | यामुन | यामुनः |
| 29 | 4 | भृवं | भुवं |
| 30 | 6 | पवित्र | पवित्रं |
| ,, | 14 | वेदिन | वेदिनः |
| 31 | 11 | विरकित | विरक्तिः |
| 33 | 5 | डित्य | डित्थ |
| 34 | 1 | जनानं | जनानां |
| 38 | 16 | भद्र | भद्रं |
| 39 | 2 | महोदय | महोदयं |
| 42 | 2 | वियुक्त | वियुक्तः |
| 43 | 6 | दंदती | दंपती |
| 46 | 14 | परांकुशाख्यो | पराशराख्यो |

| पत्रम् | पांक्तिः | देशुद्धम् | शुद्धम् |
|---|---|---|---|
| 48 | 7 | वचे | वचो |
| ,, | 15 | बृवाणम् | ब्रुवाणं |
| 49 | 2 | सस्थाप | संस्थापने |
| ,, | 17 | नेषां | तेषां |
| 52 | 16 | रङ्ग् | रङ्ग |
| 55 | 16 | राजः | राज्ञः |
| ,, | 17 | असुरराजः | असुंरराजाः |
| 56 | 7 | सत्य | सत्यं |
| 57 | 2 | यतीश | यतींश. |
| 60 | 6 | प्रमावो | प्रभावो |
| ,, | 7 | न्यापदि | प्यापदि |
| ,, | 15 | कष्यास | कप्यास |
| 61 | 1 | तदथं | तदर्थ |
| 63 | 14 | द्रिश्रिय | द्रिश्रि्श्रय |
| ,, | 15 | निथाय | निधाय |
| 63 | 5 | पराशथ्या | पराशरव्यास |
| ,, | 13 | मनोस्थि | मनोरथं |
| 67 | 11 | भट्ठनार्थ | भट्टनाथः |
| 68 | 12 | स्तेजो | त्तेजो |

| पत्रं | पक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 70 | 8 | मूये | मूचे |
| 71 | 4 | त्तदानी | त्तदानीम् |
| 72 | 13 | वनं | वने |
| 76 | 5 | धिपोऽप | धिपोऽपिः |
| ,, | 8 | प्यस्यद्यतेः | अस्मद्यतेः |
| 80 | 11 | माहपमाहः | माहपचारः |
| ,, | 12 | स्वलु | खलु |
| 81 | 5 | नुर्याम् | तुकुर्याम् |
| 87 | 10 | अधिनथः | अधिनाथः |
| 88 | 4 | भठ्ठकको | भट्ठवरो |
| ,, | 14 | सर्वस्य | सर्वस्व |
| 90 | 3 | दुंवि | दुर्वि |
| ,, | 11 | प्रभाव | प्रभावं |
| 91 | 16 | भक्तजनः | भक्तजन |
| 93 | 6 | स्वसूनेवै | स्वसूनवे |
| 93 | 17 | दा।मजातो | दात्मजातो |
| 95 | 11 | णम्य | प्रणम्य |
| 97 | 4 | श्रीमत | श्रीमति |
| 98 | 11 | स्ववंश | स्ववश |

| पत्रम् | पंक्तिः | अशुद्धम् | शुद्धम् | पत्रम् | पंक्तिः | अद्धशुम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| 105 | 18 | मुनरूप | मुनिरूप | ,, | 16 | सद्धा | सिद्धा |
| 106 | 1 | सविशद | सुविशद | 128 | 6 | कवि | कविः |
| 106 | 10 | द्धर | द्दर | ,, | 11 | हुत | हित |
| 108 | 16 | सूचक | सूचकः | 129 | 15 | त्रदण्डि | त्रिदण्डि |
| 111 | 11 | त्सवै | त्सवैः | ,, | 17 | चच्च | चय्य |
| 113 | 10 | शठको | शठकोप | ,, | 18 | न्द्रपुरा | न्द्रःपुरा |
| 114 | 2 | आत्मनीत | आत्मनीनम् | 130 | 1 | विधामु | विधातुं |
| ,, | 12 | गु | गरुं | 130 | 5 | श्रीनिधः | श्रीनिधिः |
| 122 | 18 | स्तमस्य | स्तंभस्य | ,, | | श्रीभाष्ण | श्रीभाष्या |
| 123 | 2 | मूर्ते | मूर्तेः | ,, | 6 | पडिता | पडिता |
| 124 | 3 | विधना | ब्रिधिना | ,, | 13 | पत्नय | पत्न्यै |
| 125 | 1 | रामराज | रामराज्य | 131 | 6 | सिद्ध्य | सिद्ध्यै |
| ,, | 5 | धुरा | मधुरा | ,, | 13 | त्यतोसा | त्यतस्सा |
| | | | | 132 | 17 | वाब्ध | वाब्धि |
| | | | | 133 | 16 | जीर्णेशु | जीर्णेषु |